UGC JOURNAL NO-40960 ISSN-0974-8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUARTERLY RESEARCH JOURNAL)

४२ वर्षे चतुर्थोऽङ्क (अक्टूबरमासाङ्कः) २०१७ ई०

प्रधानसम्पादकः

प्रो० रमेशकुमारपाण्डेयः

कुलपतिः

सम्पादकः

डॉ० शिवशङ्करमिश्रः

सहसम्पादकः

डॉ० ज्ञानधरपाठकः

प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

UGC JOURNAL NO-40960 ISSN-0974-8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUARTERLY RESEARCH JOURNAL)

४२ वर्षे चतुर्थोऽङ्क ( अक्टूबरमासाङ्कः ) २०१७ ई०

प्रधानसम्पादकः
प्रो० रमेशकुमारपाण्डेयः
कुलपतिः

सम्पादकः
डॉ० शिवशङ्करमिश्रः

सहसम्पादकः
डॉ० ज्ञानधरपाठकः

प्रकाशन-स्थलम्
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानितविश्वविद्यालयः)
नवदेहली-११००१६

प्रकाशकः

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानित-विश्वविद्यालयः)
कुतुब इन्स्टीट्यूशनल एरिया, नवदेहली-११००१६



ISSN :- 0974 - 8946

४२ वर्षे चतुर्थोऽङ्कः (अक्टूबरमासाङ्कः) २०१७ ई०



मुद्रकः - अमरप्रिंटिंगप्रैसः, दिल्ली

प्रधानसम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

कुलपतिः

**सम्पादकः**

**डॉ० शिवशङ्करमिश्रः**

**सम्पादकमण्डलम्**

प्रो० जयकान्तसिंहशर्मा

प्रो० हरेरामत्रिपाठी

प्रो० भागीरथिनन्दः

**सहसम्पादकः**

डॉ० ज्ञानधरपाठकः

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

- ❖ एषा त्रैमासिकी शोध-पत्रिका।
- ❖ अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।
- ❖ अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।
- ❖ अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।
- ❖ अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।
- ❖ प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।
- ❖ अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते। प्रकाशितशोधसामग्री लेखकस्यास्ति अतः लेखस्य मौलिकतादिविषये सम्पूर्ण दायित्वं लेखकस्य भविष्यति न तु सम्पादकस्य न वा प्रकाशकस्य।
- ❖ पत्रिकासम्बद्धन्यायालयीयविवादविषये दिल्लीन्यायालयक्षेत्रमेव परिसीमितमस्ति।
- ❖ अस्याः वार्षिकसदस्यताराशिः रु. १५०.०० पञ्चवार्षिकसदस्यताराशिः रु.७००.००, आजीवन-सदस्यताराशिः रु. १५००.००।। सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्रीराष्ट्रिय-संस्कृतविद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।
- ❖ पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

"छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत" राद्धान्तोऽयं सर्वथैव वैदिकं सिद्धान्तमनुहरति। तदेव "सर्वा वाचो वेदमनुप्रविष्टाः, नावेदविन्मनुते ब्रह्मकिञ्चित्" इत्यादिकं श्रौतं प्रमाणमुपलभ्यते। वेदस्यापरपर्यायता प्रणवस्याप्युपलभ्यत एव। तदेव "प्रणव एव वेद इत्येके" इत्यादिना कश्चित् सिद्धान्तविशेषस्तत्र तत्राप्तग्रन्थेषूपलभ्यते। अस्यैव प्रणवस्य ॐमित्येकाक्षरं ब्रह्ममित्यादिना समाम्नायत्वेन अभ्यासोऽपि आवश्यकेतिकर्त्तव्यतयोपदिष्ट ऋषिभिः। तदेव शब्दराशिषु विवर्तितः नैकानि रूपाणि बिभर्ति। उक्तञ्च–

**नामैवेदं रूपत्वेन ववृते रूपं चेदं नामभावेऽवतस्थे।**

**एके तदेकमभिव्यक्तं विभेजुः प्रागेवान्ये भेदरूपं वदन्ति॥**

अर्थात् विभागात्प्राक् नामरूपमेकमेव तत्त्वम्। अविद्योपसंहतिबलादस्याभिव्यक्तस्यापि तत्त्वस्य विभक्तरूपता परिलक्ष्यते। अस्यैव त्र्यम्बकरूपतापि शास्त्रेष्वभिव्यज्यते। यतः 'अबि' शब्दे इति धातोः अम्बेति शब्दः निष्पद्यते। तिस्र अम्बा यस्य स त्र्यम्बकः। अर्थात् अकारोकारमकार–रूपाः मात्रिकाः संवर्त्तावस्थायां भेदं शिथलीकृत्य विवर्त्तावस्थायां भेदमुद्भाव्य जगतोऽस्य स्थितप्रपञ्चलयानां नियामकत्वं बिभ्रति। तदेवाल्पा माता मातृका इत्यादिविवरणमपि संगच्छते। एतासु मातृकासु जागृतस्वप्नसुषुप्तिवशात् जगतः नियामकता सन्तिष्ठते। तेन वयं जानीमो यत् समस्तमपि साधुव्यवस्थापितं संस्कृतं वाङ्मयं न केवलं व्यवहारोपपादनायापितु सद्व्यवहारस्यानुगुण्यं बिभ्रद् लोकद्वयस्यापि उपकारकत्वं स्वकीयसाधुप्रयोगेषु प्रकामं राराष्टि। एतदेव **एकः शब्द सम्यग्ज्ञातः सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके च कामधुग् भवति** इत्यादिना ऋषिभिः समाम्नातम्।

एतेन स्पष्टं यत् शास्त्रान्वितशब्दराशेः सुप्रयोगायास्माभिर्सर्वैरपि सावधानं यतनीयमेव। तत्रापेक्षते काचित् प्रशिक्षणपरम्परा प्रयोगकौशलेषु विदग्धानाम्। मन्येऽहं प्रतित्रिमासमात्मन अभिनवं कलेवरं बिभ्रती एषा शोधप्रभेत्यभिधेया कमप्यपूर्वं प्रयोगकौशलमेव रचयति गूढातिगूढतत्त्वानामञ्जसोपपादनाय। तथैव अङ्कोप्ययं नैकान् निबन्धान् क्रोडीकृत्य भावसमन्वितं स्वकीयं साधुभावमासाद्य सुधीगवेषकानन्याँश्च पाठकानुपकरोति।

अस्याः अक्षय्यसौष्ठवं भवेदेवमेवेति प्रार्थये परमेशं स्वकीयमाराध्यं किमपि वाग्दैवतमिति।

**प्रो. रमेशकुमारपाण्डेयः**

**कुलपतिः**

# सम्पादकीयम्

भारतस्य सांस्कृतिकसम्पत्तिः संस्कृते समुल्लसति। भारतस्य यन्मौलिकं ज्ञानविज्ञानं, महनीया च या परम्परा, अद्वितीयमद्भुतमपूर्वञ्च यच्चिन्तनं तदखिलमनुस्यूतं संस्कृतसाहित्ये। संस्कृतशब्दस्य शाब्दिकनिष्पत्तिः शुद्धार्थे परिष्कृतार्थे श्रेष्ठार्थे च भवति। इयं देवभाषापि कथ्यते परञ्चास्याः देवभाषा इति व्यवहारेणाहताः स्वस्मिन्नपूर्वं पाण्डित्यं मन्यमानाः वस्तुतो ज्ञानलवदुर्विदग्धं ब्रह्मापि न तं नरं रञ्जयतीति भर्तृहरिवचनदृष्टान्तभूताः कर्मकाण्डस्य पूजापाठविशेषस्येयं भाषा, इयं परलोकप्रदायिनी अवैज्ञानिकी च विद्यत इति भणन्तो दृश्यन्ते, किमधिकमेतस्याः अनुपयोगित्वं प्रदर्श्य एनां तिरस्कुर्वन्ति। संस्कृतस्य यद्विपुलं वाङ्मयमस्माभिरवलोक्यते तत्र पञ्चषड्प्रतिशतम् एवांशः कर्मकाण्डकर्मणि प्रयुज्यते तत्रापि मूले विद्यते वैज्ञानिकी दृष्टिः। संस्कृतभाषायां विद्यमानं यद्भारतीयं दर्शनं यच्चास्माकं भारतीयसंस्कृतेः आधारभूतं तत्त्वं तमविज्ञाय भारतस्य चिन्तनं वेदितुं वयं सर्वथा असमर्था भवामः। किमधिकं संस्कृतवाङ्मयमधिकृत्य एतदपि वचनं नात्युक्तिपूर्णम्सहस्त्रशोऽप्यधिकवर्षेभ्यः प्राचीनायाः भारतीयसभ्यतायाः सनातनपरम्परायाश्च मूर्तिमत्स्वरूपं विद्यते संस्कृतवाङ्मयम्। संस्कृतवाङ्मयस्य विद्यते विशदं शास्त्रकलेवरम्। अत्र राजते महान् ज्ञानराशिः, न केवलमत्र वेदोपनिषत्पुराणादीनां प्रपञ्चः, न केवलं रामायणमहाभारतादीनामितिहासोऽपितु शङ्कर-रामानुज-गौतम-कपिल-जैमिनि-मध्व-निम्बार्क-भर्तृहरिप्रभृतयो महान्तो दार्शनिकाः, पाणिनि-कात्यायनसदृशाः वैयाकरणाः, पतञ्जलिसदृशो योगगुरुः, आर्यभट्ट-ब्रह्मगुप्त-भास्करप्रभृतयो गणितज्ञाः, चरक-सुश्रुत-वागभट्टसदृशाः आयुर्वेदज्ञाः, भरतसदृशो नाट्यवेत्ता, वाल्मीकि-व्यास-कालिदास-भास-भवभूति-भारवि-बाणभट्ट-दण्डिप्रभृतयो महाकवयो विराजन्ते। एभिः निरूपितं सूत्ररूपेण वैज्ञानिकं वैभवम्, तर्ककौशलम्, विश्वकल्याणवचनं विगतेभ्यः शतशोऽप्यधिकेभ्यः वर्षेभ्यः निरन्तमद्यापि च वैदेशिकान् अन्वेषणतत्परान् विदुषः सततमाकर्षयति। पाश्चात्यचिन्तकाः वैभवं विहाय गीतादिशास्त्रेषु रमन्ते, तीर्थेषु शान्तिलाभाय अटन्तो दृश्यन्ते, गायत्र्यादिमन्त्रान् सततं जपन्तः प्राप्यन्ते, अन्ते च भारतीयचिन्तनानुसारं मोक्षाय सततं यतन्ते, एतत्सर्वं देवभाषाया एव प्रभाव इति दार्ढ्येन विभावये।

विश्वविद्यालयानुदानायोगेन स्वीकृतासु सन्दर्भितशोधपत्रिकास्वन्यतमा श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्य त्रैमासिकी शोधपत्रिका ''शोधप्रभा''। इयं विगतेभ्यः द्विचत्वारिंशद्वर्षेभ्यः नैरन्तर्येण मौलिकोत्कृष्टान्वेषणान्वितशोधपत्रप्रकाशनपरायणा अनुसन्धानक्षेत्रे विशिष्टं स्थानं बिभर्ति। पत्रिकेयं संस्कृतविदुषामनुसन्धित्सूनां छात्राणाञ्च चिन्तनप्रकर्षप्रकाशनाय अनुद्घाटितज्ञानवैभवस्योद्घाटनाय महोपकारिकेति मे दृढीयान् विश्वासः।

शोधप्रभायाः प्रकृतेऽस्मिन्नङ्के नैकविधविषयगाम्भीर्यमण्डिताः त्रयोदशशोधनिबन्धाः प्रकाश्यन्ते। प्रखरप्राञ्जलप्रतिभासम्पन्नैः नदीष्णैः सुधीभिः अनुसन्धानपद्धतिमाश्रित्य तत्तद्विषयेषु गवेषणापूर्वकं मौलिकमपूर्वञ्चान्वेषणमनुष्ठितम्। अनुसन्धानपथि प्रवृत्तानामाचार्याणामनुसन्धातॄणाञ्च प्रतिभाप्रगल्भेन शोधप्रभायाः 'प्रभा' सर्वत्र विलसत्विति कामयमानोऽहं निकषधिषणापूरितविषयवस्तुजातस्य प्रकाममुद्बोधनाय सम्प्रार्थये सरस्वतीसपर्यापरान् सुमनसः मनीषिणः।

डॉ. शिवशङ्करमिश्रः
सहाचार्यः, शोधप्रकाशनविभागस्य

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग



## English Section

ISSN - 0974-8946
अक्टूबर-दिसम्बर 2017

शोधप्रभा
वर्षः 42, चतुर्थोऽङ्कः

# भक्तिपदार्थः तत्साधकबाधकयोर्विमर्शः

डॉ. शिवशङ्करमिश्रः*

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥

(श्वेताश्वतर-उपनिषद्)

भक्तिः आत्मकल्याणस्य द्वारमुद्घाटयति, अस्याः महान् महिमा शास्त्रेषु विविधेषु प्रसंगेषु विलसति। तेषु क्वचित् भक्तेर्माहात्म्यं क्वचित् भक्तानां माहात्म्यं प्रतिपादितम्। यथा भक्तिरस्य (कृष्णस्य) भजनम्[1]। भक्तिर्भक्त्या भवति[2]। भक्तिं मयि परां कृत्वा[3]। भक्त्या त्वनन्यया शक्यः[4]। भक्त्या मामभिजानाति[5]। भक्त्या युक्तो योगबलेन चैव[6]। भक्त्या लभ्यस्त्वनन्या[7]। भक्त्या नम्रतनोर्विष्णोः प्रसादमकरोद् विभुः[8]। भक्त्या विना ब्रह्मज्ञानं कदापि न जायते[9]। भक्त्या सर्वसिद्धयः सिद्ध्यन्ति[10]। भजन्ते मां दृढव्रताः[11]। भजन्त्यनन्यमनसः[12]। भजनानन्दोपासकानां न वर्णो न देशो न कालोऽस्ति[13]। भक्तवत्सलः स्वयमेव सर्वेभ्यो मोक्षविघ्नेभ्यो भक्तिनिष्ठान् सर्वान् परिपालयति[14]। भक्तानां भक्त एव ज्ञातिः[15]। भक्तानुकम्पिनं देव जगत्कारणमच्युतम्[16]। भक्त्या राजर्षयस्तथा[17]। भक्तास्तेऽतीव मे प्रियाः[18]। भक्तास्त्वां पर्युपासते[19]। भक्तिमान् मे प्रियो नरः[20]। भक्तिमान्यः स मे प्रियः[21]। इत्यादि शास्त्रीयवचनानामनुसन्धानेन तत्त्वतोऽयं निष्कर्षः प्रस्फुटति यद् आत्मकल्याणाय, मोक्षलाभाय, परमात्मप्राप्तये वा भक्तिरेव श्रेष्ठतमा साधानभूता सिद्ध्यति, अतएव भक्ताः भक्तिं वाञ्छन्ति यथा रामचरितमानसे सुन्दरकाण्डे बहुसुन्दरं पद्यं विलिखितम्-

---

* उपाचार्यः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-16

1. गो.पू.-2/2
2. सामर.- 95
3. श्रीमद्भगवद्गीता-18/68
4. तदेव-11/54
5. तदेव- 18/55
6. तदेव- 8/10
7. तदेव- 8/22
8. शरभो.- 18
9. त्रि.म.ना.- 8/4
10. त्रि.म.ना.- 8/4
11. श्रीमद्भगवद्गीता- 7/28
12. तदेव- 9/13
13. सामर.- 22
14. त्रि.म.ना.- 8/4
15. सामर- 22
16. गणपत्युपनिषद्-12
17. श्रीमद्भगवद्गीता-9/33
18. तदेव-12/20
19. तदेव-12/1
20. तदेव-12/19
21. तदेव-12/27

नाऽन्या स्पृहा रघुपते हृदयेऽस्मदीये,
सत्यं वदामि च भवानखिलान्तरात्मा।
भक्तिं प्रयच्छ रघुपुङ्गवनिर्भरां मे,
कामादि दोषरहितं कुरु मानसञ्च॥[1]

पाणिनिव्याकरणदृष्ट्या भज्-सेवायामिति धातुना क्तिन्-प्रत्यये सिद्ध्यति भक्तिशब्दः। सेवा-विभागः-गौणवृत्तिः-भङ्गी-अनुरागविशेषः-ईश्वरे परानुरक्तिः-श्रद्धा- उपासना-परमेश्वरविषये परमप्रेम एते भक्त्यर्थाः। पालिग्रन्थे भक्तिविषये भंत्ति शब्दः प्राप्यते श्रद्धा-उपासना-सेवा प्रभृत्यर्थे प्रयुक्तः। भक्तिशब्दस्य निष्कृष्टार्थं निर्धारयितुं भक्तिशब्देन सह सयुंक्तस्य शब्दस्य परिप्रेक्ष्ये भक्तेर्विश्लेषणमपेक्षते यथा भक्तियोगः, भक्तिरसः, भक्तिमार्ग इति।

भक्तियोगः- अस्याभिप्रायः Louing fath, Loyal devotion. स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः।

भक्तिरसः- अस्याभिप्रायः । sense of devotion. Sentiment of devotion.

भक्तिरसस्यैव हास्य- श्रृंगार-करुण-रौद्र-भयानक-वीभत्स-शान्ताद्भुत-वीररूपेणानुभवाद् व्यासादिभिर्वर्णितस्य विष्णोर्विष्णुभक्तानां वा चरितस्य नवरसात्मकस्य श्रवणादिना जनितश्चमत्कारो हि भक्तिरसः।

भक्तिमार्गः- भक्तेः तत्साधनं यया भगवत्प्राप्तिः।

भक्तिसूत्रे महर्षिणा नारदेन त्रयोदशानां भक्त्याचार्याणां निर्देशः कृतः। तेषु पराशरः, गर्गः, शाण्डिल्यः, ब्रह्मकुमारः, कुमारव्यासः, शुकः, विष्णुकौण्डिन्यः, शेषः, उद्धवः, आरुणिः, बालिः, हनूमान् विभीषणश्चैते प्रसिद्धाः।

एते प्रसिद्धाः भक्त्याचार्याः स्वस्वदृष्ट्या भक्तितत्त्वस्य विवेचनं लक्षणञ्चोक्तवन्तः। तच्चैवम्-

सा परानुरक्तिरीश्वरे इति शाण्डिल्यभक्तिसूत्रे[2], सा त्वस्मिन् परमप्रेमरूपा इति नारदभक्तिसूत्रे[3], पूजादिष्वनुराग इति पाराशर्यः[4], कथादिष्विति गर्गः[5]। आत्मन्यविरोधो नेति शाण्डिल्यः[6], नारदस्तु तदर्पिताखिलाचारिता तद्विस्मरणे व्याकुलतेति नारदभक्तिसूत्रे[7], भक्तिर्मनस उल्लासविशेष इति भक्तिमीमांसायाम्[8]। भक्तेषु गोविन्दसरूपकर्त्री प्रेमैकधार्त्री भवरोगहन्त्री। सा त्वं च तिष्ठस्व सुधैर्यसंश्रया, निरन्तरं वैष्णवमानसानि इति श्रीमद्भागवते[9]। सा वै पुंसा परो धर्मो यतो भक्तिरधोक्षजे, अहैतुक्यप्रतिहता ययात्मा सम्प्रसीदति पुनश्च भागवते[10]। मोक्षकारणसामग्र्यां भक्तिरेव गरीयसी। स्वस्वरूपानुसन्धानं

1. रामचरितमानसे, सुन्दरकाण्डः मंगलाचरणम्
2. शाडिल्यभक्तिसूत्रम्-2
3. नारदभक्तिसूत्रम्-2
4. नारदभक्तिसूत्रम्-16
5. नारदभक्तिसूत्रम्-17
6. नारदभक्तिसूत्रम्-18
7. नारदभक्तिसूत्रम्-19
8. भक्तिमीमांसा-1/1/2
9. श्रीमद्भागवतम्-3/17
10. श्रीमद्भागवतम्-1/2/6

भक्तिरित्यभिधीयते इति विवेकचूडामणौ[1]। स्नेहपूर्वमनुध्यानं भक्तिरित्युच्यते बुधैः।[2] अन्याभिलषिताशून्यं ज्ञानकर्माद्यनावृतम्। आनुकूल्येण कृष्णानुशीलनं भक्तिरुत्तमा इति भक्तिरसामृतसिन्धौ[3]। द्रुतस्य भगवद्धर्मात् धारावाहिकतां गता। सर्वेशे मनसो वृत्तिः भक्तिरित्यभिधीयते इति श्रीमद्भगवद्भक्तिरसायने।[4]

भगति नारदी गगन सरीरा।
इहिं विधि भवतरि कहै कबीरा।।[5]
सनकादि नारद मुनी कुश अरु ध्रुव प्रह्लाद।
भक्तियोग सो इन कियो सद्गुरु के जो प्रसाद।।[6]
सखा परम परमारथ येहू।
मन क्रम वचन राम पद गेहू।।[7]
प्रीति बिना नहि भगति दिढ़ाई।
जिमि खगपति गल के चिकनाई।।[8]

श्रद्धा और प्रेम के योग का नाम भक्ति है।[9]

एवंप्रकारेणाचार्यैः भक्तेर्लक्षणं स्वरूपञ्च प्रतिपादितम्। अस्याः भक्तेः भेदोऽपि आचार्यैः निर्धारितम्। श्रीमद्भगवद्गीतायाम् आर्तो जिज्ञासुरर्थार्थी ज्ञानी भेदेन भक्तानां चातुर्विध्यं प्रदर्शितम्। मुख्या इतरा भेदेन द्विधा इति शाण्डिल्यसूत्रे। महर्षिणा नारदेन एकादशभेदाः प्रदर्शिताः गुणमाहात्म्यासक्तिः, दयासक्तिः, पूजासक्तिः, स्मरणाशक्तिः, दास्यासक्तिः, सख्यासक्तिः, वात्सल्यासक्तिः, कान्तासक्तिः, आत्मनिवेदनासक्तिः, तन्मयतासक्तिः, परमविरहासक्तिरिति। श्रीमद्भागवते श्रवणं कीर्तनमित्यादिना नवविधेयं भक्तिः। वल्लभाचार्येण विहिता अविहिता इति भेदेन भक्तेर्द्वैविध्यं निरूपितम्–

माहात्म्यज्ञानयुत ईश्वरत्वेन प्रभो निरुपाधि स्नेहात्मिका विहिता।
अन्यतोऽप्राप्तत्वात् कामाद्युपाधिजा सा तु अविहिता।।[10]

श्रीरूपगोस्वामिना–

साधनोघैरनासंगैरलभ्याशुचिरादपि ।
हरिणा चाश्वदेयेति द्विधा सा स्यात् सुदुर्लभा।।[11]

---

1. विवेकचूडामणिः–31
2. भगवान् रामानुजाचार्यः
3. भक्तिरसामृतसिन्धुः–1/11
4. श्रीमद्भगवतभक्तिरसायनम्–2/1
5. कबीरग्रन्थावली
6. सूरदासः
7. रा.च.मा.–2/89
8. रा.च.मा.–7/89
9. चिन्तामणि– रामचन्द्रशुक्ल
10. अणुभाष्यम्– 3/3/39
11. भक्तिरसामृतसिन्धुः– 1/35

एवमेवास्मिन्नोव प्रसंगे सा भक्तिः साधनं, भावः, प्रेमा चेति त्रिधोदिता इत्यादिना भेदत्रयमपि निरूपितम्। भक्तिरियमात्मकल्याणकामभिस्सततं संसेव्या।

एतादृशी दिव्येयं भक्तिरस्माकं जीवने कथमवतरतु? कथं वयं भक्ता भवेम एतदर्थं वयं भक्तिसाधनं चिन्तयामः। भक्तिप्राप्तौ ये विघ्नाः तेषां विघ्नानां विषये इदानीं विचारयामः। भक्तिसिद्धौ किं बाधकं? कथं बाधकं? केषां तत्त्वानां भक्तौ बाधकत्वमतेत्सर्वमत्र विवेचयामः।

सर्वप्रथमं नारदभक्तिसूत्रे भक्तौ किं बाधकमिति विवेचनावसरे सूत्रमिदमस्माकं समक्षं समायाति-

**दुःसंगः सर्वथैव त्याज्यः**[1]

जीवने भक्तिमातुरवतरणे दुसंगः अत्यन्तं बाधकः। दुःसंगप्रभावादस्माकं जीवने काम-क्रोध-मोहादीनामुत्पत्तिर्भवति। एते खलु कामक्रोधमोहादयः सर्वनाशे हेतूभूताः भवन्ति अतएव महर्षिणा नारदेन चतुश्चत्वारिंशत्तमे सूत्रे कामक्रोधमोहस्मृतिभ्रंशबुद्धिनाशद्वारासर्वनाशहेतुत्वं दुःसंगस्य प्रतिपादितम् तदुक्तम्-

कामक्रोधमोहस्मृतिभ्रंशबुद्धिनाशसर्वनाशकारणत्वात्। सज्जनानां संगतिः प्राप्यते चेत् वरम् अन्यथा एकाकिजीवनमपि अत्यन्तं समीचीनम्। दुष्टजनानां संगत्यपेक्षया एकान्तसेवनमपि कल्याणाय कल्पते तदुक्तं भागवते-

**वासे वहूनां कलहो भवेद् वार्ताद्वयोरपि।**
**एक एव चरेत्तस्मात् कुमार्या इव कंकणः।।**[2]

रामचरितमानसेऽप्युक्तम्-

**विविक्तवासिनः सदा। भजन्ति मुक्तये मुदा।।**[3]

येषां संसर्गेण अस्माकं भक्तिकार्ये बाधा उदेति, भजनकार्ये अशान्तिरायाति, हरिस्मरणे उद्विग्नता भवति तेषां संसर्गः नूनं त्याज्यः। यदि मित्रसंयोगेन, सम्पत्तिसंयोगेन, मातृ-पितृ-भ्रातृ-संयोगेनापि ईश्वरस्मरणे क्लेशः तदा एतेऽपि त्याज्याः। गोस्वामिना तुलसीदासेन अयं भावः प्रकाशितः-

**जरउ सो सम्पति सदन सुखु सुहृद मातु पितु भाई।**
**सन्मुख होत जो रामपद करै न सहस सहाइ।।**

महात्मना सूरदासेनापि सूरसारावल्यां अत्यन्तं प्रासंगिकमुक्तम्-

---

1. ना.भ.सू.-43
2. श्रीमद्भागवते-11/9
3. रा.मा.अर.-4

**तजो रे मन! हरिविमुखनि को संग।**
**जाके संग कुमति उपजत है पड़त भजन में भंग।**
**तजो रे मन हरिविमुखनि को संग॥**

सांसारिकं सुखं, सम्पत्तिः यशश्च भक्तिमार्गे व्यवधानमुपस्थापयन्ति। भक्तजनानां कृते सकामकर्मणां त्यागः श्रेयस्करः। कामनया भक्तिर्विनष्टा भवति। वैभवार्जने वैभवसंरक्षणे मनस्यहर्निशमशान्तिर्भवति। चित्तवृत्तेर्निरन्तरं चाञ्चल्यं भवति फलतो भक्तिमार्गे बाधा समायाति। अतएव दार्शनिकैः साधनामार्गे, योगमार्गे, भक्तिमार्गे च अपरिग्रहस्योपदेशः कृतः। यावत्परिग्रहः तावत्र शान्तिः, अतः चित्तवृत्तिनिरोधाय एकाग्रतासम्पादनाय अपरिग्रहोऽनिवार्यः। योगसूत्रे महर्षिणा पतञ्जलिनापि पञ्चयमान्तर्गते अपरिग्रहस्य समावेशः-

अहिंसा-सत्य-अस्तेय-ब्रह्मचर्य-अपरिग्रहाः यमाः[1]। रामचरितमानसस्य किष्किन्धाकाण्डेऽपि अत्यन्तं समीचीनमुक्तम्-

**सुख सम्पति परिवार बड़ाई।**
**सब परिहरि करिहँउ सेवकाई॥**
**ए सब रामभगति के बाधक।**
**कहहिं सन्त तव पद आराधक॥**
**अब प्रभु कृपा करहुँ एहि भाती।**
**सब तजि भजन करौं दिन राती॥**

भक्तिमार्गे आलस्यं महत्तमं बाधकं। यदि हरिस्मरणे आलस्यं क्रियते चेत्तर्हि न भविष्यति कल्याणसिद्धिः। यदि आलस्यपूर्वकं जीवनं यापितं तर्हि पुनः मनुष्यजन्म नून मिलिष्यति नात्र सन्देहः। महर्षिणा नारदेन भक्तिसूत्रेयत् प्रतिपादितं सुखदुःखेच्छाकामनादीनां यदा त्यागो भवेत्तदा भजनं करिष्यामः इति चिन्तनं समीचीनं नास्ति। यतः जीवनमनित्यमतः एकमपि क्षणं व्यर्थं न त्याज्यम्-

सुखदुःखेच्छालाभादि व्यक्ते काले प्रतीक्ष्यमाणे क्षणार्द्धमपि व्यर्थं न नेयम्[2]

महात्मना सूरदासेनापि बहुसन्दरं लिखितम्-

**कहत हे आगे जपिहै राम।**
**बीचहिं भई और की और परयौं काल सौं काम।**
**बालापन खेलत ही खोयौ जोवन जोरत दाम, इत्यादिकम्।**

चर्पटपञ्जरिकास्तोत्रेऽपि भगवता शङ्कराचार्येण एवमुद्घोषितम्-

---

1. पातञ्जलयोगसूत्रम् सा.पा.
2. ना.भ.सू.-77

**बालस्तावत् क्रीडासक्तः तरुणस्तावत् तरुणीरक्तः।**
**बृद्धस्तावच्चिन्तामग्नः पारे ब्रह्मणि कोऽपि न लग्नः॥**

अतः आलस्यं विहाय आत्मकल्याणार्थं निरन्तरं हरिस्मरणं विधेयम्।

भक्तौ इच्छाराहित्यमत्यन्तमपेक्षितं भवति। मनसि यदि कस्यचिद् वस्तुनः कल्पना अस्ति, कामना अस्ति तर्हि साधकस्य साधनामार्गे नितरां बाधां जनयिष्यति। साधकः भक्तः भ्रमितो भूत्वा ईश्वरं विहाय विषयं चिन्तयिष्यति, एतेन महती हानिः भविष्यति। भागवते भगवान् स्वयमेव नारदं प्रत्युपदिशति-ये खलु साधकाः भवन्ति ते स्वं कामादिकं विषयं विहाय मामनुकुर्वन्ति। सामान्यजीवानां कृते विषयाः भवन्ति, भक्तैः सततं विषयाः तिरस्करणीयाः तदुक्तं भागवते-

**सकृद्यद्दर्शितं रूपमेतत्कामाय तेऽनघ।**
**मत्कामः शनकैः साधु सर्वान्मुञ्चति हृच्छयान्॥**[1]

रामचरितमानसेऽपि लिखितम्-

**तुलसी राम न पाइये भये विषय जल मीन।**[2]
**दीपशिखा सम जुवति तन मन जनि होसि पतंग।**
**भजहिं राम तजि कामपद करहि सदा सतसंग॥**

सूरसारावल्यां विषयस्य वर्जनमेवम्-

**रे मन! छाड़ि विषय को रचि वौ**

मनश्चाञ्चल्यं भक्तौ नितान्तं बाधकं भवति। मनसः एकाग्राभावे मनस्थिराभावे भक्तिरसम्भवा। चञ्चलेन चित्तेन कृतं जपं विनष्टं भवति। सकलस्य विकारस्य मूलं मन एव। मनः अत्यन्तं चञ्चलं भवति। गीतायामपि एवमुक्तम्-

**चञ्चलं हि मनः कृष्ण प्रमाथी वलवद्दृढम्।**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्टकरम्॥**[3]

एवमेव-

**मन एव मनुष्याणां कारणं बन्धमोक्षयोः।**[4]

अतः भक्तिसाधने मनसः एकाग्रता नितान्तमपेक्षिता भवति। यदि मनः स्थिरं नास्ति तदा किमपि एकैकमपि कार्यं समीचीनतया कर्तुं न शक्यते।

---

1. श्रीमद्भागवते- 1/16
2. रा.च.मा. दो.-135
3. श्रीमद्भगवद्गीता 6/34
4. ब्रह्मविन्दूपनिषद् 02

भक्तिमार्गे आत्मसमर्पणं नितान्तमपेक्षितं भवति। यदि ईश्वरचरणयोः पूर्णतया आत्मसमर्पणं न क्रियते तदा कीदृशी भक्तिः? मानवजीवने अहङ्कारस्य महान् दुष्प्रभावः द्रष्टुं शक्यते। अहङ्कारः पूर्णसमर्पणे बाधकः। यावद्दम्भः तावन्न भक्तिः। अतो भक्तिलाभाय दम्भः त्याज्यः। नारदभक्तिसूत्रेऽपि दम्भत्यागविषये प्रसिद्धमिदं सूत्रम्–

**ईश्वरस्याप्यभिमानद्वेषित्वाद्दैन्यप्रियत्वाच्च।[1]**
**अभिमानदम्भादिकं त्याज्यम्।[2]**

इदमपि लिखितम्–

जब मैं था तब हरि नहीं अब हरि हैं मै नाहि। इत्यादि।

भक्तिमार्गे माया महती प्रतिबन्धिका। सर्वे प्राणिनः माया प्रभावाद् प्रभाविताः। मायायाः महान् प्रभावः। मायाप्रभावाज्जीवाः मर्कट इव नृत्यन्ति, किमधिकं ब्रह्मादयोऽपि भगवतः मायया नैकबारं प्रभाविताः भवन्ति। इयं भगवतः माया आस्ति। भगवान् च मायापतिरस्ति। यथा लिखितं भागवते–

**विष्णोर्माया भगवती यया सम्मोहितं जगत्।**
**सेयं भगवतो माया यन्नयेन विरुद्ध्यते।**
**ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम्।।[3]** (भागवते)

महाकविना कबीरदासेनापि भाषितम्–

**माया महाठगनी मै जानी।**

एवं प्रकारेण भक्तौ येषां बाधकत्वमाचार्यैरनुभूतम् तत्सर्वं शास्त्रदिशा यथाशास्त्रमत्र प्रस्तुतं मयेति संक्षेपः। भक्तिलाभाय येषां तत्त्वानां साहाय्यमाचार्यैः भक्तिपरम्पराविधिः स्वीकृतं तेषामत्र संक्षेपेण समावेशः क्रियते।

**भक्तिसाधनेषु सर्वप्रथमं सुप्रसिद्धं साधनं सत्संगः**

सत्संगस्य महान् महिमा विराजते। सत्संगमन्तरा न हि दृढा भक्तिः, भक्तौ न भविष्यति दार्ढ्यम् सतसंगतिं विना। अतः सतां महापुरुषाणां सत्संगः परमावश्यकः। भक्तिग्रन्थेषु सत्संगस्य महत्त्वमादावेव लिखितम्। श्रीमद्भागवते वर्णितमस्ति यद् भक्तानां सन्महापुरुषाणां एकक्षणमपि संगः स्वर्गं मोक्षञ्चातिक्रामति–

**तुलयाम लवेनापि न स्वर्गं नाऽपुनर्भवम्।**
**भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः।।[4]**

भक्तानां चरित्रश्रवणात् भक्तेर्भावः पुष्टतामेति–

1. नारदभक्तिसूत्रम् 2. नारदभक्तिसूत्रम्–64 3. श्रीमद्भागवते–1/18 4. श्रीमद्भागवतम्–1.18.13

**श्रुतस्य पुंसां सुचिरश्रमस्य नन्वंजसा सूरिभिरीडितोऽर्थः।**
**यत्तद् गुणानुश्रवणं मुकुन्दं पादारविन्दं हृदयेषु येषाम्॥**[1]

नारदभक्तिसूत्रे महर्षिणा नारदेन वर्णितं यद् भक्तभगवतोर्मध्ये नास्ति कश्चन भेदः, उभयोरभेद एव तदुक्तं भक्तिसूत्रे-

**तस्मिंस्तज्जने भेदाभावात्।**[2]

असौ सत्संगलाभः पुण्योदयं विना न सिद्ध्यति, अर्थात् यदा अस्माकं पुण्यानामुदयो भवति तदानीं सन्तमहापुरुषाणां दर्शनं तेषां संगतिश्च प्राप्यते। सतां संगतिः नूनं शुभं फलं ददाति-

**महत्संगस्तु दुर्लभोऽगम्योऽमोघश्च**[3]

सन्तमहापुरुषाणां कृपालवलेशादपि भक्तिरूपं फलं प्राप्तुं शक्यते-

**मुख्यस्तु महत्कृपयैव भगवत्कृपालेशाद्वा**[4]

महाकविना गोस्वामिना तुलसीदासेन सत्संगविषये एवं कथितं यद् सत्संगः भक्तेः प्रथमं सोपानं, सत्सगं विना विवेकं नोत्पद्यते सत्संगोऽपि रामकृपां विना न सम्भवति-

**विनु सत्संग विवेक न होई। रामकृपा विनु सुलभ न सोई॥**[5]

पुनश्च-

**भक्ति सुतन्त्र सकल सुख खानी। विनु सत्संग न पावहिं प्राणी॥**
**सत्संगतिः कथय किं न करोति पुंसाम्।**[6] **सन्तप्तायसि संस्थितस्य................॥**[7]

नारदभक्तिसूत्रे इदं प्रतिपादितं यद् सर्वदा निखिलेभ्यः भावेभ्यः विचारेभ्यः निश्चिन्तमेव मनः हरिस्मरणे समर्थः। अर्थात् मनसा एकमात्रं भगवान् एवं सर्वथा ध्येयः उपास्यश्च तदुक्तं सूत्रम्-

**सर्वदा सर्वभावेन निश्चिन्तितैर्भगवानेव भजनीयः।**[8]

सत्संगातिरिक्तं ज्ञानं, कर्म, तपः, नियमः, संयमः, मनोभावः, प्रेम, योगः, वैराग्यञ्चैतेऽपि भक्तिमार्गे साहाय्यभूतानि भवन्ति। भक्तिसिद्धौ ज्ञानकर्मादीनां महत्तमं योगदानमित्यपि चिन्तनीयम्।

---

1. श्रीमद्भागवतम्-3/13
2. नारदभक्तिसूत्रम्
3. तदेव
4. तदेव
5. रा.च.मा.बा.-03
6. नीतिशतकम्
7. तदेव
8. नारदभक्तिसूत्रम्-79

ISSN - 0974-8946 शोधप्रभा
अक्टूबर-दिसम्बर 2017 वर्षः 42, चतुर्थोऽङ्कः

# दर्शनागमेषु मनस्तत्त्वविचारः

डॉ. रविशङ्करशुक्लः*

अयि सुधियः विचारयन्तु भवाब्धौ जन्मग्रहणे मन एव परमं कारणं विद्यते सर्वेषां प्राणिनां इदं मनः विषयेषु बलान्नियोजयति। उक्तञ्च श्रीमद्भगवद्गीतायाम् यथा-

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः॥[1]

अयम्भावः यततः प्रयत्नं कुर्वतो हि पुरुषस्य विपश्चित इन्द्रियाणि प्रमाथीनि प्रमथनशीलानि विषयाभिमुखं हि पुरुषं विक्षोभयन्त्याकुलीकुर्वन्ति, आकुलीकृत्य च हरन्ति प्रसभं प्रसह्य प्रकाशमेव पश्यतो ''विवेक-विज्ञानयुक्तं मनः'' इति शांकरभाष्ये मनसः स्वरूपं यद् विद्यते विषयम्प्रति विपश्चितं प्रति तदेवात्र स्पष्टीकरोति आचार्यः।

तानि सर्वाणि संयम्य युक्त आसीत मत्परः।
वशे हि यस्यन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता॥[2]

अयम्भावः सर्वाणि इन्द्रियाणि स्वस्मिन् संयम्य यः भगवत्परो भवति तस्यैव प्रज्ञा प्रतिष्ठिता भवति। यो हि विवेकी इन्द्रियं न जयति। तान् विवेकिनः इमानीन्द्रियाणि विषयगर्तेषु नियोजयन्ति।

तद्यथा- इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि॥[3]

अतोऽत्र भगवान् अपरेण श्लोकेन बोधयति-

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता॥[4]

यैः इमानीन्द्रियाणि निगृहीतानि तस्यैव प्रज्ञा प्रतिष्ठिता विद्यते साधनाकर्मसु। इन्द्रियजयं विना साधनापथेषु च अधिकारोऽपि न भवति। तस्मात् मनोजयं कथं स्यात् एतर्थं पृच्छति भगवन्तमर्जुनः।

---

* उपाचार्यः सांख्ययोगविभागे, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम् नवदेहली-16

1. श्रीमद्भगवद्गीता 2/60, शां.भा.
2. श्रीमद्भगवद्गीता 2.61 शां.भा.
3. श्रीमद्भगवद्गीता 2/67, शां.भा.
4. श्रीमद्भगवद्गीता 2/68, शां.भा.

अर्जुन उवाच-

**योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन।**
**एतस्याहं न पश्यामि चञ्चल्वात्स्थितिं स्थिराम्।।[1]**

**चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्।।[2]**

अयम्भावः इन्द्रियेष्वीदं मनः चञ्चलं न केवलमत्यन्तं चञ्चलं प्रमाथि च प्रमथनशीलम्, प्रमथ्नाति शरीरमिन्द्रियाणि च विक्षिपति परवशीकरोति। किञ्च बलवत् प्रबलं न केन चिन्नियन्तुं शक्यं दुर्निवारत्वात्। तात्पर्यमिदं यत् परमात्माऽपि अर्जुनेनोक्तं वचः समर्थयति-

श्रीभगवान् उवाच

**असंशयं महाबाहो मनो दुर्निग्रहं चलम्।।**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते।।**

**असंयतात्मना योगो दुष्प्राण इति मे मतिः।।**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः।।[3]**

दुर्जयं मनो जेतुम् अभ्यासवैराग्य एव, नान्यत् कश्चन उपाय इति। एवम्भूतस्य दुर्जयस्य मनसः किं स्वरूपमिति? श्रीमद्भगवद्गीतायाः दशमाध्याये निरूपितं भगवता "इन्द्रियाणां मनश्चास्मि" भूतानामस्मि चेतना।।

अयम्भावः- इन्द्रियाणामेकादशानां चक्षुरादीनां मनश्चास्मि संकल्पविकल्पात्मकं मनश्चास्मीति। श्रीमच्छंकरभगवत्पादैः स्वीये विवेकचूडामणौ ग्रन्थे मन एकाऽविद्येति उक्तं तद्यथा-

**नह्यस्त्यविद्या मनसोऽतिरिक्ता मनो ह्यविद्या भवबन्धहेतुः।**
**तस्मिन्विनष्टे सकलं विनष्टं विजृम्भितेऽस्मिन्सकलं विजृम्भते।।**

**स्वप्नेऽर्थशून्ये सृजति स्वशक्त्या भोक्त्रादिविश्वं मन एव सर्वम्।**
**तथैव जाग्रत्यपि नो विशेषस्तत्सर्वमेतन्मनसो विजृम्भणम्।।**

**वायुना नीयते मेघः पुनस्तेनैव नीयते।**
**मनसा कल्पते बन्धो मोक्षस्तेनैव कल्पते।।**

**तस्मान्मनः कारणमस्य जन्तो बन्धस्य मोक्षस्य च वा विधाने।**
**बन्धस्य हेतुर्मलिनं रजोगुणैर्मोक्षस्यशुद्धं विरजस्तमस्करम्।।**

---

1. श्रीमद्भगवद्गीता 6.33.34 2. श्रीमद्भगवद्गीता 6/35-36

**मनो नाम महाव्याघ्रो विषयारण्यभूमिषु।**
**चरत्यत्र न गच्छन्तु साधवो ये मुमुक्षवः॥**

**सुषुप्तिकाले मनसि प्रलीने, नैवाऽस्ति किञ्चित्सकलप्रसिद्धेः।**

**अतो मनः कल्पित एव पुंसः, संसार एतस्य न वस्तुतोऽस्ति।**

उपनिषत्स्वपि बन्धमोक्षस्य कारणं मन एवाऽस्ति–

**''मन एव मनुष्याणां कारणं बन्धमोक्षयोः''।**[1]
**बन्धाय विषयाऽसक्तं मुक्त्यै निर्विषयं स्मृतम्॥**

श्रुतिष्वुक्तं विद्यते यत्– **यैः प्राणिभिः मनो जितं तेनैव संसारोऽपि जितः। उच्यते श्रुतिषु यथा जितं जगद् केन मनो हि येन॥**

तस्मादयं निष्कर्षो भवति, मनो हि विषयेभ्यः निगृह्य स्वात्मन्येव नियोजयति, एवं कृते समाधौ प्रतिष्ठितो भवति।

एवंभूतं यन्मनः तस्य स्वरूपमग्रेऽपि विचार्यते साधनापथेषु लीनैस्साधकपुङ्गवैः, तद्यथा– ज्ञानार्णवतन्त्रे मनोभिस्सह बुद्धिः चित्तं तिस्रः तत्त्वमाहृत्य त्रिपुरो भवति, त्रिसृभ्यो मूर्तिभ्यः पुरातनत्वात् त्रिपुरेति–

**''नाडीत्रयं तु त्रिपरा सुषुम्ना पिङ्गलात्विडा**[2]**''**

**मनो बुद्धिस्तथा चित्तं पुरत्रयमुदाहृतम्।**
**तत्र-तत्र वसत्येषा तस्माद् तु त्रिपुरा मता॥**

एतन्मनः सौन्दर्यलहर्यां त्रिपुरोपासकैः श्रीमच्छंकरभगवत्पादैः भगवत्याः स्वरूपं मत्वा स्तूयते यथा–

**मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि**
**त्वमापस्त्वं भूमिस्त्वयि परिणतायां न हि परम्।**
**त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा**
**चिदानन्दकारं शिव युवति भावेन विभृषे॥**[3]

अयमर्थः ''मनस्त्वम्'' इत्यादि ''भूमिः'' इत्यनेन पञ्चभूतात्मकः कार्यरुप परिणामो विकारः उक्तः। ''त्वयि परिणतायाम्'' इत्यनेन निर्विकारात्मकः कारणरुपेणावस्थितिविशेषः प्रकृत्या परिणामः उक्तः। ''नहि परम'' इत्यनेन अपरिणामिन्या परिणामो नास्ति अनवस्थापत्तेः इति।

---

1. वेदान्तसन्दर्भ श्लोक सं. 171-178 पृष्ठ सं. 202-203 तक
2. त्रिपुरातापिन्युपनिषत् श्लोक सं. 03-वृ. स. 469
3. सौन्दर्यलहरी श्लोक सं. 35
4. हठयोगप्रदीपिका चतुर्थोपदेशः द्रष्टव्यः

भावनोपनिषदि मनसः किं स्वरूपं वर्ण्यते, तदुच्यते शब्दादितन्मात्राः पञ्चपुष्पबाणाः। मन इक्षुः धनुः।। रागः पाशः द्वेषोऽङ्कुश इति। अयमर्थः सर्वानर्थस्य मूलं मन एवास्ति यथा मानवशरीरे मधुमेह रोगोत्पद्यते। तच्च रोगः कथमुत्पद्यते, केन कारणेनोत्पद्यते? मधुरमिष्ठान्नसेवनेन रोगोत्पत्तिः जायते। तच्च मधुरं शर्करा भवति, शर्करा कथमुत्पद्यते, इक्षोरुत्पद्यते शर्करा। यथा सर्वेषां रोगाणां मूलं कारणं भवति शर्करा। तथैव मन एव सकलानर्थस्य कारणं निश्चीयते शास्त्रेषु।

एवमेव योगशास्त्रे हठयोगनामको ग्रन्थः राजते। यद्यपि अयं ग्रन्थः आगमिको ग्रन्थः। अस्मिन् हठयोगशास्त्रे मनसः स्वरूपमेवं वर्ण्यते आचार्यैः।

''कर्पूरमनो यद्वत्सैन्धवं सलिले यथा'
तथा संधीयमानं च मनस्तत्त्वे विलीयते।
ज्ञेयं सर्वं प्रतीतं च ज्ञानं च मन उच्यते।
ज्ञानं ज्ञेयं नष्टं च नान्यः पन्था द्वितीयकः।।
मनोदृश्यमिदं सर्वं यत्किञ्चित्सचराचरम्।
मनसो ह्युन्मनीभावाद्द्वैतं नैवोपलभ्यते।।

ज्ञेयवस्तु परित्यागाद्विलयं याति मानसम्।
मनसो विलये जाते कैवल्यमवशिष्यते।।

अनाहतस्य शब्दस्य ध्वनिर्हृद्युपलभ्यते।
ध्वनेरन्तर्गतं ज्ञेयं ज्ञेयस्यान्तर्गतं मनः।
मनस्तत्र लयं याति तद्विष्णोः परमं पदम्।।

अयमर्थः-मनसो विलये जाते द्वैतमपि लीयत त्रिभिःज्ञेयमिति। सर्वं सकलं ज्ञेयं ज्ञानार्हं प्रतीतं च ज्ञातं च ज्ञानं च इदं सर्वं मन उच्यते। सर्वस्य मनः कल्पनामात्रत्वान्मनः शब्देनोच्यते।

अनाहतस्य शब्दस्यानाहतस्वरस्य यो ध्वनिर्हृदि उपलभ्यते श्रूयते तस्य ध्वनेरन्तर्गतं ज्ञेयम्, ज्योतिः स्वप्रकाशचैतन्यं ज्ञेयस्यांतर्गतं ज्ञेयाकारतामापन्नं मनोऽन्तःकरणं तत्र ज्ञेये मनो विलयं याति परवैराग्येण सकलवृत्तिशून्यसंस्कारशेषं भवति। तद्विष्णोर्विभोरात्मनः परममन्तःकरणवृत्युपाधि-राहित्यान्निरूपाधिकं गम्यते योगिभिरिति।

अयमाशयः आभिरेव व्याख्याभिः यदि मनो केनाऽपि इन्द्रियेण सह न प्रवर्तते, तर्हि तदिन्द्रियं कस्याऽपि विषयस्य ग्रहणं कर्तुं न प्रभवति। तस्मात् निश्चयेन वक्तुं शक्यते, यदिदं मनो विषयाणां ग्रहणाय इन्द्रियैस्सह मनसोऽपेक्षाऽनिवार्यता सर्वैरेवाचार्यैरङ्गीकृता। तथा च सांख्ययोगशास्त्रेऽपि मनसः लक्षणं यन्निरूपितमाचार्यैः, तदेवात्र उपस्थाप्यते तद्यथा-

1. सांख्यकारिका गौड़पादभाष्यम्

"उभयात्मकमत्र मनः संकल्पकमिन्द्रियञ्च साधर्म्यात्।
गुणपरिणाम विशेषान्नानात्वं बाह्यभेदाश्च॥"[1]

एवं बुद्धीन्द्रियकर्मेन्द्रियभेदेन दशेन्द्रियाणि व्याख्यातानि, मन एकादशकं किमात्मकं? किं स्वरूपञ्चेति तदुच्यते- अत्रेन्द्रियवर्गे मन उभयात्मकं बुद्धीन्द्रियेषु बुद्धीन्द्रियवत्, कर्मेन्द्रियेषु कर्मेन्द्रियवत् कस्माद्? बुद्धीन्द्रियाणां प्रवृत्तिं कल्पयति कर्मेन्द्रियाणां च तस्मादुभयात्मकं मनः संकल्पयतीति सङ्कल्पकम्। किञ्चान्यत् इन्द्रियं च साधर्म्यात् समानधर्मत्वात्, सात्विकाहङ्कारात् बुद्धीन्द्रियाणि कर्मेन्द्रियाणि मनसा सहोत्पद्यमानानि मनसः साधर्म्यं प्रति तस्मात् साधर्म्यान्मनोऽपीन्द्रियम् एवमेतान्येकादशेन्द्रियाणि सात्विकाद्वैकृतादहङ्कारादुत्पन्नानि। तत्र मनसः का वृत्तिरिति? संकल्पो वृत्तिः। बुद्धीन्द्रियाणां शब्दादयो वृत्तयः कर्मेन्द्रियाणां वचनादयः। अथैतानीन्द्रियाणि भिन्नानि भिन्नार्थ-ग्राहकाणि किमीश्वरेण उत स्वभावेन कृतानि, यतः प्रधानबुद्ध्यहंकारा अचेतनाः पुरुषोऽप्यकर्तेत्यत्राह-इह सांख्यानां स्वभावो नाम कश्चित्कारणमस्ति, अत्रोच्यते गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च। इमान्येकादशेन्द्रियाणि शब्दस्पर्शरूपरसगन्धाः पञ्चानां वचनादानविहरणोत्सर्गानन्दाश्च। संकल्पश्च मनसः एवमेते भिन्नानामेवेन्द्रियाणामर्थाः गुणपरिणामविशेषात् - गुणानां परिणामो गुणपरिणामस्तस्य विशेषादिन्द्रियाणां नानात्वं बाह्यार्थभेदाश्च। अथैतन्नानात्वं नेश्वरेण नाहंकारेण बुद्ध्या न प्रधानेन न पुरुषेण स्वभावात् कृतगुणपरिणामेनेति गुणानामचेतनत्वान्न प्रवर्तते। प्रवर्तते च कथं कथम्? वक्ष्यतीहैव-

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।
पुरुषविमोक्षनिमित्तं यथा प्रवृत्तिः प्रधानस्य॥

एवमचेतना गुणा एकादशेन्द्रियभावेन प्रवर्तन्ते 'विशेषोऽपि तत्कृत एव येनोच्चैः प्रदेशे चक्षुरवलोकनाय स्थितम्, तथा घ्राणं तथा श्रोत्रं तथा जिह्वा स्वदेशे स्वार्थग्रहणाय। एवं कर्मेन्द्रियाण्यपि यथायथं स्वार्थसमर्थानि स्वदेशावस्थितानि स्वभावतो गुणपरिणामविशेषादेव न तदर्था अपि। यथोक्तं शास्त्रान्तरे-गुणागुणेषु वर्तन्ते "गुणानां या वृत्तिः सा गुणविषया एवेति बाह्यार्था ज्ञेया गुणकर्त्ता एवेत्यर्थः प्रधानं यस्य कारणमिति"।

एवम्प्रकारेण सांख्ययोगशास्त्रे मनसः स्वरूपमुक्तं विद्यते। इदं मनः इन्द्रियमपि विद्यते, अतीन्द्रियमपि विद्यते इत्यत्र नास्ति संशीतिलेशः। कठोपनिषदि इन्द्रियाणामुत्तरोत्तरसूक्ष्मत्वञ्च उच्यते तथा च श्रेष्ठत्वमपि प्रतिपाद्यते यथा-

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।[1]
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥

स्थूलानि तावदिन्द्रियाणि तानि यैरर्थैरात्मप्रकाशनाय आरब्धानि तेभ्य इन्द्रियेभ्यः स्वकार्येभ्यस्ते परा ह्यर्थाः सूक्ष्मा महान्तश्च प्रत्यगात्मभूताश्च तेभ्योऽप्यर्थेभ्यश्च परं सूक्ष्मतरं महत्प्रत्यगात्मभूतं च मनः। मनः शब्दवाच्यं मनस आरम्भकं भूतसूक्ष्मं संकल्पविकल्पाद्यारम्भकत्वात्।

1. कठोपनिषद्

मनसोऽपि परा सूक्ष्मतरा महत्तरा प्रत्यगात्मभूता च बुद्धिः, बुद्धिशब्दवाच्यमध्यवसायाद्यारम्भकं भूतसूक्ष्मम्। बुद्धेरात्मा सर्वप्राणिबुद्धीनां प्रत्यगात्मभूतत्वादात्मा महान् सर्वमहत्त्वात्। अव्यक्तात्प्रथमं जातं हैरण्यगर्भ तत्त्वं बोधाबोधात्मकं महानात्मा बुद्धेः पर इत्युच्यते।

''यदेतद्हृदयं मनश्चैतत्।''[1]

यदुक्तं पुरस्तात्प्रजानां रेतो हृदयं हृदयस्य रेतो मनो मनसा सृष्टा आपश्च वरुणश्च हृदयान्मनो मनसश्चन्द्रमाः। तदेवैतद्हृदयं मनश्च एकमेव तदनेकधा। एतेनान्तःकरणेनैकेन चक्षुर्भूतेन रूपं पश्यति, श्रोत्रभूतेन शृणोति, घ्राणभूतेन जिघ्रति, वाग्भूतेन वदति, जिह्वाभूतेन रसयति, स्वनैव विकल्पनारूपेण मनसा विकल्पयति, हृदयरूपेणाध्यवस्यति। ऐतरेयोपनिषदनुसारेण मन इन्द्रियैस्सह सकलव्यापारे प्रयोजकं विद्यते। तदतिरिच्य इन्द्रियाणि कस्मिन्नपि कर्मणि न प्रर्वतन्ते, न च विषयग्रहणं कुर्वन्तीत्यर्थः। अतो देवा एव सकलव्यापाराय इन्द्रियत्वेन मानवशरीरे प्रवेशमकार्षुरिति।

अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशच्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशत्।

**उपसंहारः** – एतेन मनसः महत्त्वमत्यन्तं सुस्फीतं प्रतिभाति। इदमेव मनो ज्योतिषां ज्योतिरिनियादिमहिम्ना वेदेष्वपि बहुप्रथितम्। मन्येऽहमत्र अभ्यासयुक्ताः जनाः अस्य निरोधं विधाय आत्मानं योगारुढं कुर्वन्ति। अतः तत्र विषये सर्वैरपि अवधानेन यतनीयम्।

---

1. ऐतरेयोपनिषद्

ISSN - 0974-8946
अक्टूबर-दिसम्बर 2017

शोधप्रभा
वर्षः 42, चतुर्थोऽङ्कः

# शिशुपालवधे शब्दशास्त्रसन्दर्भाः

डॉ.संजयकुमारचौबे*

महाकविमाघस्य यशोभूतं शिशुपालवधाख्यं महाकाव्यं को न जानाति सहृदयो विबुधो वा। माघः स्वलेखनीप्रसूतामृततुल्यवचोभिः काव्यरसिकान् विविधशास्त्रसमाराधकांश्च सहैव सन्तर्पयति। यत्र कविविरचिते महाकाव्ये काव्यगतानि रसालङ्कारादीनि नैकविधान्यव्याजगतानि तत्त्वानि विद्यमानानि सन्ति तत्रैव संस्कृतवाङ्मयस्यान्तर्गतानि शास्त्रभूत व्याकरण-सांख्य-योग-न्याय-ज्योतिष्-संगीतकलादिभिः सम्बद्धानि भूयांसि तत्त्वानि विराजन्ते। महाकविमाघः सर्वशास्त्रतत्त्वज्ञोऽस्तीति नास्ति कश्चन सन्देहः। एतस्य पाण्डित्यं यथा दर्शनादिषु प्रसरति तथैव नीत्यादिशात्रेष्वपि। किञ्च व्याकरणशास्त्रे शब्दशास्त्रे वा विशेषतोऽनुरागो वरीवर्तीति काव्यस्याध्ययनेन परिस्फुटति। अत एव तत्काव्ये शब्दशास्त्रगतानां शब्दक्रियापदयोस्तत्रापि क्रियापदेषु सनन्तयङन्तयङ्लुङन्तादीनां प्रयोगविधानानि कानिचन अपूर्वाण्येव वैशिष्ट्यानि द्योतयन्ति। परमप्रकाण्डस्यास्य महाकवेः साधुप्रयोगं प्रेक्ष्य परमवैयाकरणो भट्टोजिदीक्षितः[1] सिद्धान्तकौमुद्यामुदाहरणत्वेन तदीयकाव्यस्य पद्यमुद्धरति। यथा-

> पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः।
> विगृह्य चक्रे नमुचिद्विषो बली य इत्थमस्वास्थ्यमहर्दिवं दिवः॥[2]

वस्तुतः माघस्य महाकाव्ये शब्दप्रयोगचातुर्येण साकं दर्शनादिशास्त्रमिव शब्दशास्त्रसम्बद्धा बहवः सन्दर्भा विद्यमानाः सन्ति। क्वचिदौपम्येन क्वचिद् दृष्टान्तेन क्वचिच्च विषयवर्णनरूपेण वा। प्रकृतमहाकाव्ये महाकविमाघः प्रत्यक्षतः शब्दविद्याया[3] नामाख्यानं करोति तथा च 'पाणिनीयमि'ति[4] पदप्रयोगेण शब्दशास्त्रस्याधारभूताया 'अष्टाध्याय्या' सङ्केतं विदधाति। स द्वितीयसर्गे अर्थगौरवरूपेण राजनीतिगतगूढतत्त्वानां निदर्शनप्रसङ्गे व्याकरणशास्त्रस्य प्रवृत्तौ हेतुत्वं सम्यगुपस्थापयति। यथा-

> अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।
> शब्दविद्येव नो भाति राजनीतिरपस्पशा॥[5]

---

* पूर्वशोधच्छात्रः, साहित्यविभागे, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-16

1. सिद्धान्तकौमुदी, लकारार्थप्रकरणम्
2. शिशुपालवधम् 1.51
3. शिशुपालवधम् 2.112
4. तत्रैव 19.75
5. शिशुपालवधम् 2.112

अर्थात् नीतिशास्त्रविरुद्धपदन्यासा अमात्यप्रभृतीनां जीविकासाधनभूता क्रियावसाने बहुधनधान्यप्रदायिनी राजनीतिः चारैर्विना तथैव न शोभते यथा शब्दविद्या (व्याकरणम्) पाणिन्यादिकृतसूत्राणामविरुद्धपदयुता न्याससहिता (जिनेन्द्रबुद्धिकृतकाशिकावृत्तेर्व्याख्यानम्) काशिकासूत्रवृत्तिसंवलिता महाभाष्यसहिता पस्पशाह्निकेन विना न शोभते।

अत्र **'प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते'** इति लोकप्रसिद्धोक्तिः सङ्गच्छते। प्रसङ्गेऽस्मिन् कवेस्तात्पर्यमस्ति यत् महर्षिपतञ्जलिकृतमहाभाष्ये यत् प्रथमाह्निकं नामान्तरेण पस्पशाह्निकं वर्तते तत्र **'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्'**[1] इति व्याकरणस्य प्रयोजनं प्रतिपादितं विद्यते। अत एवास्य ज्ञानं विना सूत्रवृत्तिन्यासभाष्यादिपरिपूर्णायामपि शब्दविद्यायां तच्छास्त्राध्येतृणां प्रवृत्तिर्न भवति।

नीत्या परमनिपुणोऽयं महाकविः कश्चात्र भुवां केवलं संज्ञां बिभर्ति को वा गुणगरिम्णा शूरत्वमधिगच्छतीति सम्यग्जानाति। स द्वितीयसर्गे बलराममुखात् परिभवेऽपि नराणां क्षमावृत्तिं निन्द्यति। तन्मते ये मानवा जातिक्रियागुणादिभिः प्रयोजनानि न सिद्ध्यन्ति तेषां जन्म यदृच्छाशब्दवत् संज्ञायैव जायते। यथोक्तम्-

**असम्पादयतः कञ्चिदर्थं जातिक्रियागुणैः।**
**यदृच्छाशब्दवत्पुंसः संज्ञायै जन्म केवलम्॥**[2]

अत्रायमाशयः- शब्दशास्त्रे शब्दानां प्रवृत्तिश्चतुर्धा मन्यते। जातिशब्दाः गुणशब्दाः क्रियाशब्दाः यदृच्छाशब्दाश्चेति। तत्र जातिः ब्राह्मणत्वादयः, क्रिया अध्ययनादयः, गुणाः शुक्लादयः, यदृच्छा डित्थडवित्थादयश्चेति। महाभाष्यकारः पतञ्जलिः चतुष्टयी शब्दानां प्रवृत्तिरिति[3] वचनमुपस्थापयन् सिद्धान्ततः साधुत्वप्रयोगदृष्ट्या त्रयी एव शब्दप्रवृत्तिरिति मनुते। यथा- **''त्रयी शब्दानां प्रवृत्तिः- जातिशब्दाः गुणशब्दाः क्रियाशब्दा इति। न सन्ति यदृच्छाशब्दाः।''**[4]वस्तुतः नितान्तमेव रूढत्वेन यदृच्छाशब्दाः परिष्कृतभाषायां त्याज्या भवन्ति। न्यासकारः[5] प्रक्रियाकौमुद्याष्टीकाकारो[6] विठ्ठलश्चामुमेव सिद्धान्तं स्वीकुरुतः। आचार्यमम्मटः भाष्यकारवचनमङ्गीकुर्वन् जात्यादौ शक्तिग्रहो भवतीति प्रतिपादनप्रसङ्गे यदृच्छाया संज्ञात्वं ब्रवीति। तद्यथा- **''डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतिक्रमं स्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषु सन्निवेश्यत इति सोऽयं संज्ञारूपो यदृच्छात्मक इति।''**[7]

---

1. महाभाष्यम्, पस्पशाह्निकम्
2. शिशुपालवधम् 2.47
3. चतुष्टयी शब्दानां प्रवृत्तिः- जातिशब्दाः गुणशब्दाः क्रियाशब्दाः यदृच्छाशब्दाः चतुर्थाः। ऋऌक् (प्रत्या.2) सूत्रभाष्यम्।
4. महाभाष्यम्, ऋऌक् (प्रत्या.2) सूत्रभाष्यम्।
5. तदेवं निरूक्तशाकटायनदर्शनेन त्रयी शब्दानां प्रवृत्तिः- जातिशब्दा गुणशब्दाः क्रियाशब्दा इति। न्यासः-3.3.1
6. एवं जातिगुणक्रियावाचित्वाच्छब्दानां त्रय्येव प्रवृत्तिर्न चतुष्टयी, यदृच्छकानामभावात्। (प्रक्रियाकौमुदी) उद्धृतम्, संस्कृत व्याकरणशास्त्र का इतिहास (युधिष्ठिर मीमांसक भाग-2) पृ10
7. काव्यप्रकाशः (मम्मटः) द्वितीय उल्लासः, पृ. 45

विश्लेषणेनेदं वक्तुं शक्यते यत् यथा जातिक्रियागुणादिभिः कस्यचिदर्थविशिष्टस्य सम्पादनं डित्थडवित्थादि यदृच्छावाचकाः शब्दा न कुर्वन्ति केवलं यादृच्छिकसंज्ञामेव लभन्ते तथैव पुंसोऽपि जात्यादिभिः प्रयोजनविशेषान्यसाधयन्तः केवलं देवदत्त यज्ञदत्तादि संज्ञामेव बिभ्रति।

एतदतिरिक्तं दशमसर्गे महाकविमाघः शब्दानां व्युत्पत्तिसन्दर्भमप्युपस्थापयति। यथा–

**दत्तमात्तमदनं दयितेन व्याप्तमातिशयिकेन रसेन।**
**सस्वदे मुखसुरं प्रमदाभ्यो नाम रूढमपि च व्युदपादि।**[1]

अत्रात्यधिकमद्यपानेन प्रमदेति रूढगतं नाम 'प्रकृष्टो मदो यस्या सा' इति व्युत्पन्नरूपं सञ्जातमिति भावः।

महाकवेर्माघस्य शिशुपालवधमहाकाव्ये धातु–कारकसन्दर्भितां वर्णनीयतां विभाव्य शब्दशास्त्रविदोऽपि पदे–पदे प्रसीदन्ति। प्रकृतमहाकाव्यस्य दशमसर्गेऽत्यन्तमेव रमणीयेन विधिना प्रमदानां मद्यपानवर्णनं शब्दशास्त्रगतं धातूपसर्गयोर्विषयकं तथ्यं पुरस्कृत्य प्रतिपादयति कविः। तन्मते मद्यस्य प्रभावात् प्रमदानामङ्गेषु चिरकालाद् विद्यमानः किञ्चाप्रयुक्तत्वादप्रकाशितो विलासः तथैवाभिव्यक्तोऽभवत् यथा भूवादिषु निहिताः किञ्चाप्रयुक्तकारणादप्रकाशितार्थाः प्रपराद्युपसर्गात् प्रकाशिता भवन्ति। यथोक्तम्–

**सन्तमेव चिरमप्रकृतत्वादप्रकाशितमदिद्युतदङ्गे।**
**विभ्रमं मधुमदः प्रमदानां धातुलीनमुपसर्ग इवार्थम्।।**[2]

महाकविरत्र 'धातूनामनेकार्थः' इति व्याकरणशास्त्रसम्मतं तथ्यं सङ्केतयति। अथ चोपसर्गाणां प्रयोगार्थवैशिष्ट्यं किमित्यपि ब्रूते। **'दधाति शब्दस्वरूपं वा यः सः धातुः'**[3] पाणिनीनये **'भूवादयो धातवः' (पा.सू.1.3.1)** इति सूत्रद्वारेण क्रियावाचिनो भूवादयो धातुसंज्ञां लभन्ते। क्षीरतरङ्गिणीग्रन्थे क्षीरस्वामिना सौनागानां मतमुपस्थापयन् लिखति– **'धातूनामनेकार्थनिर्देशोऽयं निदर्शनार्थ इति। यदाहुः–**

**क्रियावाचित्वमाख्यातुमेकोऽत्रार्थः प्रदर्शितः।**
**प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः।।**[4]

एवमनेकार्थवाचका धातव उपसर्गाणां योजनेन पठितधात्वर्थातिरिक्तं तत्र लीनमर्थमभिव्यञ्जयन्ति। यथा **'दा दाने'** इत्यत्र आङुपसर्गात् आदानं समुपसर्गात् संदानमित्यर्थद्वयं दा धातुरेव प्रकटयति। प्रकृतसन्दर्भे व्याकरणे प्रख्यातमेकं पद्यमपि विद्यते। तद्यथा–

---

1. शिशुपालवधम् 10.23
2. शिशुपालवधम् 10.15
3. संस्कृत व्याकरणशास्त्र का इतिहास (युधिष्ठिर मीमांसक भाग–2) पृ.18
4. क्षीरतरङ्गिणी, (क्षीरस्वामी) उद्धृतम्, संस्कृत व्याकरणशास्त्र का इतिहास (युधिष्ठिर मीमांसक भाग–2) पृ.85

**उपसर्गेण धत्वर्थो बलादन्यत्र नीयते।**
**प्रहाराहार-संहार-विहार-परिहारवत्।।**

महाभाष्यकारः पतञ्जलिरप्युपसर्गाणां महत्त्वं क्रियाणां वैशिष्ट्याय मनुते। तेनोक्तम्- '**उपसर्गाश्च पुनरेवमात्मका यत्र क्रियावाची पदं श्रूयते तत्र क्रियाविशेषमाहुः। यत्र हि श्रूयते तत्र ससाधनं क्रियामाहुः।**'[1]

महाकविमाघः शिशुपालवधे यत्र कुत्रचित् धातुपदप्रयोगं विनैव केवलं धात्वर्थनिर्देशेन मनोवाञ्छितं काव्यं प्रस्तौति। समराङ्गणे यदा श्रीकृष्णोऽरीन् निहन्ति तदा तस्य पराक्रमं हितकारित्वं च सूचयत् पद्यमिदं विभावनीयम्-

**उद्धतान्द्विषतस्तस्य निघ्नतो द्वितयं ययुः।**
**पानार्थे रुधिरं धातौ रक्षार्थे भुवनं शराः।।**[2]

अत्र भगवतः श्रीकृष्णस्य शराणां क्रियाकारित्वं कविः धात्वर्थद्वारेण विदधाति न च धातुपदप्रयोगेण। अर्थात् उद्धतान् शत्रून् हिंसतः हरेः शरा रूपद्वयमवाप्नुवन्। रक्तं पातुं पानार्थे भुवनं रक्षितुं रक्षार्थ इति। अत्र महाकविः पा धातोः प्रथितयो द्वयोरर्थयोः समुचितं निर्देशः कृतोऽस्ति। यथोक्तम्- **'पा पाने' 'पा रक्षणे'** इति। निकर्षतः तस्य हरेः शराः शत्रूणां रुधिरं पिबन्ति, भुवनं पान्ति चेति द्वितयत्वम्।

चतुर्दशसर्गे भगवतः श्रीकृष्णस्य माहात्म्यवर्णने महाकविमाघस्य धातुकारकाश्रितं व्याकरणमूलकं पाण्डित्यं प्रोक्तधातुवर्णनप्रसङ्गवदेव सर्वान् सुधीनाकर्षयति। तद्यथा-

**केवलं दधति कर्तृवाचिनः प्रत्ययानिह न जातु कर्मणि।**
**धातवः सृजति संहृशास्तयः स्तौतिरित्यत्र विपरीतकारकः।।**[3]

अत्र महाकविः कर्तृकारकौ सृजादिधातूनाश्रित्य हरेर्वैशिष्ट्यं तनुते। तस्याशयोऽस्ति- सृज (विसर्गे) धातुः, सम् पूर्वक हृञ् (हरणे) धातुः, शासु (अनुशिष्टौ) धातुश्चेति हरेः सन्दर्भे केवलं कर्तृकारकत्वं भजन्ते। यथा- हरिः सृजति, हरिः संहरति, हरिः शास्तीति। न च कर्मकारकत्वमिति यथा-कश्चित् हरिं सृजति संहरति शास्ति। आहोस्वित् हरिः सृज्यते संह्रियते शिष्यत इति। यतोहि अनादिनिधनत्वात् सर्वसामर्थ्यवशादेष जगति न कैश्चिदपि सृजनसंहरणशासनादिरूपं बिभर्ति। किञ्चैतत् विपरीतं 'ष्टुञ् स्तुतौ' धातुः विपरीतकारकमर्थात् कर्मकारकमिति धत्ते। यथा-जनो हरिं स्तौति, जनेन हरिः स्तूयत इति न खलु कर्तृत्वे हरिः जनं स्तौति हरिणा जनः स्तूयते वा। यतश्च सर्वे हरिमेव स्तुवन्ति नैष हरिरन्यानिति फलितार्थः।

---

1. महाभाष्यम् 5.2.28
2. शिशुपालवधम् 19.103
3. शिशुपालवधम् 14.66

शिशुपालवधमहाकाव्ये महाकविमाघः यत्र कुत्रचित् शाब्दिकानामिव तत्पथमनुसरन् निजाभिलषितं तत्त्वं प्रेक्षावतां पुरतस्समुपस्थापयति। षोडशसर्गे शिशुपालस्य शौर्यवर्णने तस्य परिभाषाविषयकं प्रगाढं ज्ञानमवलोक्य सर्वेषामेव सहृदयानां शास्त्रविदश्च चेतो मोमुद्यते। तद्यथा-

**परितः प्रमिताक्षरापि सर्वं विषयं व्याप्तवती गता प्रतिष्ठाम्।**
**न खलु प्रतिहन्यते कुतश्चित्परिभाषेव गरीयसी यदाज्ञा॥**[1]

अल्पाक्षरत्वादपि या सम्पूर्णलक्ष्ये व्याप्ता भवति, प्रमाणरूपत्वात् कुत्रचिदपि न बाधते तथा च विशिष्टार्थप्रतिपादिकास्ति तस्याः परिभाषावदेव शिशुपालस्याज्ञा वरीवर्तीत्याशयः।

प्रकृतस्थले महाकविमाघः शब्दशास्त्रे प्रथितायाः परिभाषायाः स्वरूपं काव्यात्मिकया भाषया बोधयति। सामान्यलक्षणे परिभाषा **'अनियमे नियमकारिणी'**[2]ति मन्यते। लक्षणदृष्ट्या **'परितो व्यावृतां भाषां परिभाषां प्रचक्षते।'**[3] महाभाष्यकाररीत्या एषा परिभाषा एकदेशे स्थित्वा सर्वं शास्त्रं प्रकाशयति। यथोक्तम्- **'कश्चिदेकस्थः सर्वं शास्त्रमभिज्ज्वलति। यथा प्रदीपः सुप्रज्ज्वलितः सर्वं वेश्म अभिज्ज्वलति।'**[4] वस्तुतः शाब्दिकानां नये **'यथोद्देशं संज्ञा परिभाषम्' 'कार्यकालं संज्ञापरिभाषमि'**ति[5] रूपद्वयं विद्यते। प्रकृतप्रसङ्गे माघेन यत् स्वरूपं प्रदर्शितं तद् दृष्ट्या अस्याश्चत्वारि वैशिष्ट्यानि लक्ष्यन्ते। प्रथमम् अल्पाक्षररूपत्वात् सूत्ररूपत्वम्, द्वितीयं शास्त्रगतविषयस्य व्यापनम्, तृतीयं प्रमाणरूपत्वम्, चतुर्थं विशिष्टार्थप्रतिपादनत्वम्। प्रमाणरूपसन्दर्भे इदमवधेयं यत् याः परिभाषाः सूत्ररूपे न पठिताः सन्ति किञ्च सूत्रेभ्य ज्ञापिता न्यायसिद्धा वा भवन्ति ता अपि प्रमाणरूपतां दधतीति।

चतुर्दशसर्गे महाकविः धर्मराजयुधिष्ठिरस्य राजसूययज्ञं सम्यग्वर्णयति। तत्र यजमानपत्न्या द्रौपद्या हविष्यपदार्थमीक्षणानन्तरम् ऋत्विजो हवनकर्म प्रारभन्ते। तत्प्रसङ्गे माघः स्वकीयं शास्त्रगतं पाण्डित्यं पुरस्कृत्य ऋत्विजामागमे विहितस्य ऊहस्य चर्चामवतारयति। यथा-

**नाञ्जसा निगदितुं विभक्तिभिर्व्यक्तिभिश्च निखिलाभिरागमे।**
**तत्र कर्मणि विपर्यणीनमन् मन्त्रमूहकुशलाः प्रयोगिणः॥**[6]

अर्थात् युधिष्ठिरस्य यज्ञक्रियायामूहकर्मणि निपुणा ऋत्विज आम्नाये निखिलाभिर्विभक्ति-भिर्वचनादिभिर्लिङ्गादिभिर्वा कथयितुमशक्यत्वात् तं मन्त्रं कर्माङ्गदेवतारूपवाक्यं विपरिणमन्ति स्म।

---

1. शिशुपालवधम् 16.80
2. संस्कृत व्याकरणशास्त्र का इतिहास (युधिष्ठिर मीमांसक भाग-2) पृ.302
3. संस्कृत व्याकरणशास्त्र का इतिहास (युधिष्ठिर मीमांसक भाग-2) पृ.302
4. महाभाष्यम्, षष्ठी स्थाने योगा 1.1.48
5. संस्कृत व्याकरणशास्त्र का इतिहास (युधिष्ठिर मीमांसक भाग-2) पृ. 302
6. शिशुपालवधम् 14.23

अत्र **'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्'** इति महाभाष्यकारपतञ्जलिनिर्दिष्टव्याकरणशास्त्रस्य मुख्यप्रयोजनान्तर्गतम् **'ऊह'** इत्यस्य निर्देशोऽस्ति। वस्तुतः विभक्त्यादीनां विपरिणाम ऊह इति। वेदे पठितेषु मन्त्रेषु प्रयुक्तानां पदानां सर्वेषु लिङ्गेषु विभक्तिषु वा प्रयोगोऽशक्यः। फलतः यज्ञभूमिगतैः ऋत्विजैः तत्तत्मन्त्रेषु यथोचितलिङ्गादीनामाहोस्वित् विभक्त्यादीनां विपरिणामो विधीयते। एष एव विपरिणाम ऊहपदेन ज्ञायते। यथोक्तम्- **''ऊहः खल्वपि। न सर्वैर्लिङ्गैर्न सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः। ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः।**[1]

ऊहतत्त्वस्य सम्यग्ज्ञाता महाकविः वेदादिषु हस्तकल्पितस्वराणां सन्दर्भं कथं विस्मर्तुं शक्तः। अत एव स युधिष्ठिरस्य राजसूययज्ञे उद्‌गातारः सामवेदं हस्तसञ्चालनादिपुरःसरं निषादादिस्वरान् प्रकटीकुर्वन्तोऽस्खलितरूपेण पठन्तीति भाषते। यथा-

**सप्तभेदकरकल्पितस्वरं साम सामविदसङ्गमुज्जगौ।**
**तत्र सूनृतगिरश्च सूरयः पुण्यमृग्यजुषमध्यगीषत।।**[2]

वस्तुतः हंस्तसञ्चालनं विना मन्त्राणामुच्चारणस्य विधानमेव नास्ति। पाणिनीयशिक्षायां भगवता पाणिनिना प्रोक्तमस्ति यत् यो हि हस्तहीनं स्वरवर्णार्थविवर्जितं मन्त्रं पठति स वियानिं प्राप्नोति। एतद्विपरीतं हस्तादिसञ्चालनेन यो पठति स ब्रह्मलोकमधिगच्छति। तद्यथा-

**हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम्**
**ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति।**
**हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम्**
**ऋग्यजुः सामभिः पूतो ब्रह्मलोके महीयते।।**[3]

अस्मादेव राजसूययज्ञे उद्‌गातारः सिद्धान्तमेनमनुसरन्तीति।

महाकविमाघः स्वरविषयकं तथ्यं न खलु स्थूलतया प्रत्युत सूक्ष्मातिसूक्ष्मतया जानाति। तद् धिया स्वरभेदादर्थभेदो भवतीति[4] सिद्धान्तपक्षमनुसरन्तो राजसूययज्ञे शब्दशास्त्रज्ञा ऋत्विजः साम्यात् सन्देहोत्पादकयोः (सन्देहाय साम्यरूपयोः) पृथक् पृथक् फलं प्रतिपादकतयोः समासयोर्विग्रहं स्वरेण कुर्वन्ति स्म। यथा-

**संशयाय दधतोः सरूपतां दूरभिन्नफलयोः क्रियां प्रति।**
**शब्दशासनविदः समासयोर्विग्रहं व्यवससुः स्वरेण ते।।**[5]

---

1. महाभाष्यम्, पस्पशाह्निकम्
2. शिशुपालवधम् 14.21
3. पाणिनीयशिक्षा 54-55
4. मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तदर्थमाह।
   स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्।। पाणिनीयशिक्षा 52
5. शिशुपालवधम् 14.24

अत्र महाकविः स्वरेण समासस्य निर्णयो भवतीति ख्यापयति। प्रकृतप्रसङ्गे तस्य बुद्धौ महाभाष्यस्य व्याकरणाध्ययनप्रयोजनविषयकमसन्देहमतं तिष्ठति। यतोहि महाभाष्यकारः पतञ्जलिरेतदेव मतं तत्र प्रस्तौति। यथा- **'असन्देहार्थं चाध्येयं व्याकरणम्। याज्ञिकाः पठन्ति-स्थूलपृषती-माग्निवारुणीमनड्वाहीमालभतेति। तस्यां सन्देहः-स्थूला चासौ पृषती च स्थूलपृषती, स्थूलानि पृषन्ति यस्याः सा स्थूलपृषतीति। तां नावैयाकरणः स्वरतोऽध्यवस्यति। यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुब्रीहिः( पा.सू.6.2.1 ) अथान्तोदात्तत्वं ततस्तत्पुरुषः( पा.सू.6.1.223 ) इति।''**[1]

एतेन विवरणेन संशयात्मके पदे स्वरेण समासस्य निर्णयं विधाय तदनुसारमेवार्थस्य परिज्ञानं करणीयमिति रीतिं नूनमेव जानाति शिशुपालवधकारः।

प्रकृतप्रसङ्गं विहाय महाकविमाघः द्वितीयसर्गे शिशुपालस्य शौर्यं वर्णयन् शब्दशास्त्रगतस्वरप्रक्रियायाः समुचितं निदर्शनं विदधाति। तद्यथा-

**तदीशितारं चेदीनां भवांस्तमवमंस्त मा।**
**निहन्त्यरीनेकपदे य उदात्तः स्वरानिव॥**[2]

अर्थात् चेदीनां स्वामिनं भवान् युद्धादिप्रसङ्गेन न तिरस्करोतु यतोहि स एकपदे स्थित अरीन् तथा निहन्ति यथा सुप्तिङन्तलक्षणैकपदे उदात्तः अनुदात्तस्वरितादिस्वरान् निहन्ति बाधते वा।

अत्रायमाशयः- शब्दशास्त्रे स्वरितप्रक्रियान्तर्गतम् **'अनुदात्तपदमेकवर्जम्' ( पा.सू. 6.1. 158 )** इति परिभाषात्मकं सूत्रं सुप्तिङन्तरूपे एकपदे यस्योदात्तः स्वरितो वा विधीयते तमेकाचं परित्यज्य शेषमनुदात्तं विदधाति। यथा- गोपायतं नः। इत्यत्र गुपू रक्षणे धातोः स्वार्थे आय प्रत्यये विहिते 'गोपाय' इत्यस्य **'सनाद्यन्ता धातवः'( पा.सू. 3.1.32 )** इत्यनेन धातुत्वे **'धातोः' ( पा.सू 6. 1.162 )** इति सूत्रेण अन्तस्थयकाराकारस्योदात्तत्वे सति तमुदात्तरूपमेकाचं वर्जयित्वा शिष्टानामनुदात्तत्वमिति विधीयते। तात्पर्यमिदं यत् एकपदे एकस्यैवोदात्तस्वरस्य कारणादन्ये स्वरा निघाता भवन्तीति।

शिशुपालवधकारो माघः युद्धमध्ये जातं समराङ्गणं पूर्णतश्शब्दशास्त्रमधिकृत्य साधु वर्णयति। असौ व्याकरणे ये शब्दा निपात्यन्ते तानाश्रित्य मनोहरं पद्यं रचयति। तद्यथा-

**निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलम्।**
**पाणिनीयमिवालोकि धीरैस्तत्समराजिनम्॥**[3]

अर्थात् यत्र समराङ्गणे सुहृत्-स्वामि-पितृव्य-भ्रातृ-मातुलादयः निपातिताः (वीरशय्यां गमिताः) सन्ति तत्समराङ्गणं धीराः ( धैर्यवन्तः, विद्वांसो वा) सुहृदादिशब्दनिपातनरूपं पाणिनीयाष्टाध्यायीव्याकरणमिव अपश्यन्।

1. महाभाष्यम्, पस्पशाह्निकम्
2. शिशुपालवधम् 2.95
3. शिशुपालवधम् 19.75

अत्रेदं बोध्यम्- शब्दशास्त्रे लक्षणाभावे बहवश्शब्दाः साधुत्वाय सूत्रस्वरूपेणोच्चारिताः निपातिताः भवन्ति। यथा सुहृदादयः। उदाहरणार्थम्- शोभनं हृदयं यस्य स सुहृत्। अत्र **'सुहृद्दुर्हृदौ मित्रामित्रयोः' (पा.सू 5.4.50)** इति सूत्रेण हृदयस्य स्थाने हृदिति निपातिते सुहृत् शब्दः सिद्ध्यति। एवमेवात्र पठिताः सर्वेऽपि शब्दाः निपात्यन्ते।

अत्रोक्तसन्दर्भातिरिक्तं महाकविमाघः शब्दशास्त्रगतमपरोक्षमपि संदर्भं प्रकटयति। यथा-

**वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव।**
**अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता॥[1]**

अत्र वाङ्मयस्यानन्त्ये **' वर्णैः कतिपयैरेव'** इत्यनेन पाणिनीयशिक्षाप्रोक्तं 'त्रिषष्टिश्चतुः- षष्टिर्वा वर्णाः शम्भुमते मताः।'[2] इति वचनं चरितार्थतां याति। यतोहि एतैरेवाक्षरैः वाङ्मस्यानन्त्यम्।

इत्थं शिशुपालवधे महाकाव्ये महाकवेर्माघस्य पाण्डित्यं विविधशास्त्रमादाय प्रस्फुटी भवति। तथापि तत्र शब्दशास्त्रगतं गभीरं तलस्पर्शि च ज्ञानं किञ्चिदन्यतममेव वैशिष्ट्यमावहति। शब्दशास्त्रस्य ग्रन्थानां नामोल्लेखपुरःसराणि स्थूलसूक्ष्मगतानि आ संज्ञातः स्वरप्रक्रियान्तर्गतं समायातनैकविधसिद्धान्ततत्त्वानि कवेस्तदीयकाव्यस्य च महत्तामेव ख्यापयन्ति। वस्तुतः **'शास्त्रं हि निश्चितधियां क्व न सिद्धिमेति।'[3]** इति माघवचनेन तस्य शास्त्रेषु निश्चिता मतिः तत्रापि शब्दशास्त्रेऽवश्यमेव साफल्यमवाप्नोतीति वक्तुं शक्यते। सम्भवतः एतदेव कारणं यदत्र काव्ये किञ्चित् काठिन्यमपि समायाति परन्तु तेन काव्यस्याव्याजमनोहरं रूपं न क्षीयत इति शम्।।

---

1. शिशुपालवधम् 2.72
2. पाणिनीयशिक्षा 3
3. शिशुपालवधम् 5.47

ISSN - 0974-8946
जनवरी-मार्च 2018
शोधप्रभा
वर्षः 43, द्वितीयाङ्कः

# अवसादचिकित्सायां योगस्य भूमिका

**डॉ. खगेन्द्रपात्रः***

मानवस्य जीवनधारणाय प्रचलितेऽस्मिन् विज्ञानयुगे बहूनि सुखसाधनान्युपलभ्यन्ते। लक्ष्यस्थानीयानि तानि सांसारिकवस्तून्यधिगन्तुं प्रतिमुहूर्तं प्रतियोगिषु स्पर्द्धाऽनुष्ठीयते तदीयचित्तभूमिषु। अनुष्ठीयमान-स्पर्द्धाविशेषेषु केचित् सफलकामा भवन्ति। किन्तु विविधप्रतिकूलपरिस्थितिवशात् स्पर्द्धायां योऽसमर्थोऽकृतकार्यो वा भवति सोऽप्रसन्नोऽसन्तुष्टोऽशान्तश्च भवति। बहुकालं धावन् मनस्यनुभूयमाणैरेतैः दुःखदभावैः तस्य मानसिकभारराम्यो विनश्यति। एतेन मनसि समुत्पद्यते सन्तापो (Stress) यस्त्वसादं जनयन् कालक्रमं हृद्घातादिव्याधिभिः प्राणान् हरति। अतो विद्वद्भिः साधूक्तम्-

> **सन्तापाद् भ्रश्यते रूपं सन्तापाद् भ्रश्यते बलम्।**
> **सन्तापाद् भ्रश्यते ज्ञानं सन्तापाद् व्याधिमृच्छति॥**

वस्तुतोऽवसादो न केवलं सर्वविधविकासस्य प्रतिबन्धको भवत्यपितु मानसिकशारीरिकरोगयोः (Psychosomatic diseases) 'मुख्य उत्स' इत्याधुनिकचिकित्सातत्त्वज्ञानामभिमतम्। तदनुसारमवसादः सकलसमस्यायाः केन्द्रबिन्दु इति केचन विद्वांसः कथयन्ति। अस्य कारणमिदं यद् यदि कश्चिदवसादग्रस्तो भवति, तर्हि तस्यात्मविश्वासः क्षीणो भवति। आत्मविश्वासरहितजनो भयातुरः शङ्काकुलः संशयात्मा च भवति। 'संशयात्मा विनश्यती'ति गीतोक्तसिद्धान्तानुसारं तस्य भयातुरजनस्य रोगनिवारकशक्तिः क्षयते। कालक्रमेण सो दुर्बलमस्तिष्कः सन् किमपि विकासमूलकं कर्म सम्पादयितुमनिच्छुकोऽसमर्थश्च भवति। यो दीर्घकालमवसादग्रस्तो भवति, स आत्मानं मूल्यहीनं परित्यक्तं वेति मत्वा परिशेषे आत्महत्यायै प्रवृत्तो भवति। एवं क्रमेणावसादग्रस्तव्यक्तिः दुर्बलमना रूग्णः स्वल्पायुश्च भूत्वा विनाशमधिगच्छति। संक्षेपेणेदमेवं वक्तुं शक्यते यदवसादोऽन्तःरिपुरिव सकलविकासमार्गमवरूध्य व्यक्तिं विनाशमार्गमभित आकर्षति। एतेन समग्रजीवनकालो दुःखमयो भवति। अत आत्मविकासाय स्वास्थ्यरक्षायै चावसादस्य मूलोत्पाटनमवश्यं कर्त्तव्यम्।

अनुसन्धानादिदमेवावगम्यते यद् एलोपाथीयहोमिओपाथीयायुर्वेदीयादिचिकित्साविधानानु-सारमवसादस्य निराकरणाय ये केचन पद्धतयः प्रयुज्यन्ते, ताः न पर्याप्ताः। अत आधुनिकचिकित्सातत्त्वज्ञाः योगविज्ञानं विकल्पचिकित्सासाधनरूपेण स्वीकुर्वन्ति। वस्तुतः पातञ्जलयोगदर्शनादिसंस्कृत-शास्त्रेष्वसादनिराकरणाय पर्याप्तोपायाः समुपलभ्यन्ते। सुतरामाधुनिकचिकित्साव्यवस्थायाः परिपुष्टये 'अवसादचिकित्सायां योगस्य भूमिकेति' विषये पातञ्जलयोगदर्शनमाधारीकृत्य संक्षेपेणालोच्यते।

---

* प्लाटसंख्या-698/766, श्रीनिकेतनम्, बालेश्वर, बालिआ-756056 ओडिसा

## अवसादस्य स्वरूपम्

व्युत्पत्तिदृष्ट्यावसादस्य स्वरूपमधोगतिः विनाशप्रक्रिया वेति ज्ञायते। 'अव' उपसर्गपूर्वकं 'सद्' धातोः 'घञ्' प्रययाद् अवसादेति शब्दो निष्पद्यते। षदलृ 'धातोः' विनाशगति-अवसन्नेति त्रिविधा अर्थाः सन्ति। अतो उक्तम्- 'षदलृ (सद) विशरणगत्यवसादनेषु।' नीचार्थक - अव - उपसर्गेण सह 'सद्' धातोः संयोगेणावसादेति शब्दोऽधोगतिं सूचयति। इयमधोगतिः मनसि शरीरे च यथाक्रमम् अवसन्नता क्लान्तिश्चेति दुःखदसत्तारूपाभ्यामनुभूयते। अवसन्नतेति पदेनोदासीनता क्लान्तिरुत्साहहीनता स्फूर्तिरहितावस्था चावगम्यन्ते।

अवसादरोगोऽधोगत्यवस्थां विसृज्य विविधरूपैः व्यक्तेः समाजस्य च विनाशं करोति। अवसादस्यापरं नाम विषादः। आकस्मिकप्रतिकूलपरिस्थित्या यदा मनुष्यस्य मन आहतप्रायं भवति, तदा तस्य दुश्चिन्तायाः तरङ्गः समुत्पद्यते। दुश्चिन्तेयं यदि बहुकालं यावदनुभूये, तर्हि मनः क्लान्तमवसन्नं वेति भवति। अयमवसन्नभावोऽवसादस्य स्वरूपमेव। मानसिक्यवसन्नतां समग्रस्नायुमण्डले उत्तेजनामुत्पाद्य शरीरमपि क्लान्तं निष्प्रभं च करोति। शरीरे यदावसादः सञ्चरति तदा शरीरं शिथिलं भवति। अपि च हृदयस्पन्दनगतिः श्वासगतिश्च विकृते भवतः। तस्मात् स्नायुविकलदौर्बल्यमुपजायते।[1]

मानसिकचिकित्साविज्ञानानुसारमवसादो हि मानसिकरोगः। अतो मनुष्यस्य मनस्यनुशोचनात्मग्लानि-नैराश्य-हतोत्साहासहायबोधापमानित-मतिभ्रम-भयाशङ्कापराधबोधादिरूपैरवसादस्य स्वरूपं परिलक्ष्यते।

## अवसादस्य लक्षणम्

अवसादस्य लक्षणं विविधरूपैः शरीरे मनसि च परिलक्ष्यते। अवसादग्रस्तव्यक्तेः मनसि भय उत्कण्ठा च वर्धेते। यथाकालं सुखनिद्रा नानुभूयते। द्वन्द्वभावस्य प्राधान्यात् कर्तव्याकर्तव्यनिर्णयव्यापारे रोगी अनिश्चितभावमनुभवति।

भोजनेऽरुचिरनुभूयते। अरुचिवशाद् व्यक्तिः कदाऽर्द्धाहारेण कदा वाऽनाहारेण जीवनमतिवाहयति। भोजनह्रासात् स क्षीणकायो भवति। उद्वेगवशाच्छरीरान्मात्राधिकं स्वेदनिर्गमनमपि भवति। निरन्तरदुश्चिन्तावशात्तेन कोष्ठकाठिन्यमनुभूयते। पुनरवसादवशादात्मानमन्येभ्योऽक्षमो हीनो वा विचार्य व्यक्तिः ईर्ष्यापरायणः क्रुद्धश्च भवति। लक्ष्यविषयकस्वकर्मण्यसफलतामाधारीकृत्य स आत्मानमपमानि-तमिति विचारयति।

---

1. भगवद्गीतायामवसादग्रस्तार्जुनस्यावस्था वर्णिताधोविधम्-
   सीदन्ति मम गात्राणि मुखं च परिशुष्यति।
   वेपथुश्च शरीरे मे रोमहर्षश्च जायते।
   गाण्डीवं संस्रते हस्तात्त्वक्चैव परिदह्यते।
   न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः।। -(गीता-I/29/30)

"जातस्य हि ध्रुवो मृत्यु"रिति सृष्टिगतनियमात् साधारणव्यक्तिः मृत्योरनिवार्यतां विज्ञाय कस्यचिदात्मीयस्य विच्छेदेनानुभूतं दुःखं विस्मरति। किन्त्ववसादग्रस्तव्यक्तिरात्मीयजनस्य वियोगेन तमेव मृतव्यक्तिं निरन्तरं स्मरणं कृत्वाधिकतरं नैराश्यमसहायताञ्चानुभवति। तस्मात् कारणात् सः केनापि सह मित्रतां कर्तुं पराङ्मुखो भवति। पुनश्चात्मनो वृत्तिगतकर्मण्यात्मीयजनेषु चोदासीनो भवति। कदा व्यक्तिरभिमानहेतुकक्रोधात्मपीडनभावान् व्यवहारेण प्रकटयति। स आत्मानं मूल्यहीनमपमानितञ्चेति मत्वाऽऽत्महत्यां कर्तुं चेष्टते।

## अवसादस्य कारणानि

वयोदृष्ट्या लिङ्गदृष्ट्या चावसादस्य बहूनि कारणानि सन्ति। तेषु कतिपयान्यत्र संक्षेपेणोपस्थाप्यन्ते। तद्यथा–

1. प्रियजनस्य मृत्युः।
2. आत्मीयजनेभ्यो विच्छिन्नः सन् यदि कश्चिद् व्यक्तिः दूरवर्त्तिस्थानमधिवसति।
3. वृत्तिक्षेत्रे परिवारे वा यद्यशान्तिप्रदपरिस्थितिः निरन्तरमनुभूयते।
4. यदि काचिदनूढा युवती केनचिद् दुर्जनेन धर्षिता भवति।
5. यदि कश्चिन्निष्कपटव्यक्तिः केनचित् कपटमित्रेण विश्वासघातवशात् प्रवञ्चितो भवति।
6. बहुकालं यावद् यदि कश्चिद् व्यक्तिः व्याधिप्रपीडितो भवति।

अवसादस्य कारणप्रसङ्गे योगदर्शनं भिन्नरूपेण तथ्यमुपस्थापयति। तदनुसारमवसादस्य मुख्यं कारणं खलु चित्तस्य विक्षिप्तावस्था। पतञ्जलिमहर्षिणा यद्यपि नामतोऽवसादरोगस्य प्रसङ्गे न किमप्युक्तं, तथापि तेन चित्तविक्षेपस्य कारणनिरूपणमाधारीकृत्य योगदर्शने व्याधि–संशय–प्रमादालस्य–भ्रान्तिदर्शनादयो नकारात्मकाः मानसिकवृत्तय उल्लिखिताः, ता एव चित्तं विक्षिपन्ति। तस्मादेव ते हानिकारकवृत्तयोऽवसादस्य निदानस्थानीयाः भवन्ति।[1]

चित्तस्य विक्षिप्तावस्थायै यानि कारणस्थानीयानि तत्त्वानि सन्ति तान्येव चित्तवृत्तिनिरोध–व्यापारेऽन्तरायाः विघ्नस्वरूपा इत्यवगन्तव्याः। अस्मिन् प्रसङ्गे पतञ्जलिनोक्तं यदवसादस्य निदानस्थानीयाः खलु दुःखदौर्मनस्यादयः।[2] अत्र दुःखस्यापरं नाम क्लेश इत्यवगन्तव्यम्। क्लिश्नाति चित्तं शरीरञ्चेति क्लेशः। पुनश्च क्लेशस्य कारणान्यनेकानि सन्ति। अतः क्लेशनिरूपणप्रसङ्गे पतञ्जलिनोक्तं यदविद्याहङ्कारद्वेषादयो मनसि शरीरे च क्लेशं जनयन्ति।[3] अविद्याया अपरं नाम विपरीतज्ञानम्।

---

1. व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शना–
   लब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः।। –(पात.योगसू.I/30)
2. दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः। –(पात.योगसू.I/31)
3. अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः। –(पात.योगसू.II/3)

वेदान्तदर्शनस्य सिद्धान्तानुसारमित्थं वक्तुं शक्यते। यदतस्मिन् तद्बुद्धिरविद्येति। अर्थात् यस्य वस्तुनः यो गुणो धर्मो वा नास्ति, तस्मिन् वस्तुनि स धर्मोऽस्तीति मिथ्यास्वीकृतिरेवाविद्या।

यथा - यद्यपि कपटभावसम्पन्नमित्रस्य मनसि सत्यधर्मः हितकारिभावश्च न विद्यते, तथाप्यविद्यावशान्निर्बोधव्यक्तिः यदा तस्मिन् कपटमित्रे विश्वासं करोति, आत्मानं तस्मिनुन्मोचयति वा, तदा स कालक्रमेण कपटमित्रेण प्रतारितः सन् क्लेशमनुभवति। प्रसङ्गेऽस्मिन् पतञ्जलिपादैरुक्तं यदनित्याशुचिदुःखादिषु वस्तुषु यथाक्रमं नित्याक्रमं नित्यशुचिसुखादिभावानां स्वीकृतिरेवाविद्येति।[1] अनेन भ्रान्तिपूर्णकार्येण मनुष्यः दुःखमनुभवति। पुनश्च दुःखमेव चित्तमवसादमयं करोति। सुतरामवसाद-निराकरणाय यथोचितचिकित्सा कर्त्तव्येति।

**अवसादचिकित्सापद्धतयः**

येभ्यः कारणेभ्योऽवसादरोगः समुत्पद्यते तेषां मूलोत्पाटनाय पतञ्जलिपादैः योगदर्शने कतिपयपद्धतय उल्लिखिताः। तेषु मुख्योपाया अत्रोपस्थाप्यन्ते।

अवसादो मनसः रोग इति कृत्वावसादचिकित्सा मुख्यतो मनसि कर्त्तव्या। योगदर्शनानुसारं मनस चित्तस्य वा क्षिप्तावस्थैवावसादस्य हेतुस्थानीया। अतः चित्तं यथा शान्तं भवेत्तदनुसारमुचितोपचारः कर्त्तव्यः।

क्षिप्तावस्थाया अपरं नाम चित्तस्य गुरुतरास्थिरावस्थेति प्रागेव सूचिता। इयमस्थिरावस्था मनसो बहिर्मुखीभावादुपजायते। यदा मनसि रजोगुणस्य तमोगुणस्य च मात्रातिशये बर्द्धेते, तदा चित्तं बहिर्मुखं भवति। इदं बहिर्मुखं मनः इन्द्रियभोग्यविषयेष्वासक्तं भवति।

वस्तुतो मनः विना इन्द्रियाणि स्वस्वविषयान् भोक्तुमसमर्थानि भवन्ति। अत आवश्यकतानुसारं मनोविषयेषु यथोचितं संयुक्तं भवेत्। किन्तु विषयैः सह मात्राधिकसंयोग उच्छृंखलसंयोगौ वा मनस्यस्थिरतां वर्द्धयति। वृद्धिमधिगतेयमस्थिरता यदि दीर्घकालं मनसि तिष्ठति, तर्हि मनः क्लान्तमवसन्नं वेति भवति। मनस इयमवसन्नतैवावसादः।

एतेनावगम्यते यच्चित्तस्यानियन्त्रितावस्था चित्तमवसादयति। अतोऽवसादस्य चिकित्सायै चित्तगतवृत्तीनां नियन्त्रणम् (निरोधः) आवश्यकम्। इयं चित्तवृत्तिनिरोधप्रक्रियैव योगः। अतः पतञ्जलिना चित्तवृत्तीनां नियन्त्रणमाध्यमेनावसादनिराकरणाय यथार्थत उक्तम्- "योगश्चित्तवृत्तिनिरोधः।"[2] चित्तवृत्तिनिरोधाय तेन योगदर्शने यमनियम आसनप्राणायामप्रत्याहारधारणाध्यानसमाधय इति वक्तुं शक्यते। एतेषु कतिपयाः मुख्योपायाः प्रसङ्गानुसारमत्रोपस्थाप्यन्ते।

---

1. अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या। - (पात.योगसू.I/5)
2. पात.योगसूत्रम्-I/2

## 9. ईश्वरप्रणिधानेनावसादचिकित्सा

परिवारे वृत्तिगतकर्मक्षेत्रे वाऽत्यधिककार्यभाराद् भयसन्देहाशङ्कादिनकारात्मकभावाच्च मनस्युत्पद्यते सन्तापः (Stress)। यदि दीर्घकालं यावदयं सन्तापो मनोप्रदेशं प्रदहति, तर्हि तदेव मनोऽवसन्नं क्लान्तं वा भवति। एतेनावगम्यते यद् भयादिनकारात्मकप्रवृत्तयोऽवसादस्योत्पत्तये प्रमुखकारणानि। अतोऽवसादचिकित्सायै कारणानामेषां निराकरणं प्रथमकर्त्तव्यम्। अस्मिन् प्रसङ्गे ईश्वरप्रणिधान-मव्यर्थसाधनमिति विज्ञाय पतञ्जलिमहर्षिणा योगदर्शने उक्तं यद् सर्वशक्तिमयेश्वरस्य दिव्यशक्तिमधिगन्तुं प्रारभते। तेन च तदेव मनो निर्भीकं भवति।[1]

**ईश्वरप्रणिधानात् कथं मनो निर्भीकं भवतीति जिज्ञासायामुच्यते-**

'प्र' अ 'नि' इत्युपसर्गपूर्वकं धारणार्थक 'धा' धातोः 'ल्युट्' प्रत्यये, प्रणिधानमिति पदं निष्पन्नम्। अस्यायमर्थो यत् प्रदृष्टेन सुदृढेन वाधारणमिति। सुतराम् 'ईश्वरप्रणिधानम्' इत्यनेनाविरतमात्मनि (मन - वचन - कर्मसु) ईश्वरीयभावस्यावधारणमीश्वरमभितश्चात्मनोऽवस्थानमित्यवधेयम्। अस्मादवगम्यते यदीश्वरस्य समीपेऽवस्थानमेवेश्वरप्रणिधानम्। ईश्वरप्रणिधानप्रक्रियावसरे साधक ईश्वरार्पितबुद्ध्येत्थं परिकल्पयति- "श्वासक्रियावसरेष्वीश्वरः प्राणशक्तिरूपेण मम हृदयं प्रविश्य निरन्तरं मामवलोकयति मम वचनञ्च शृणोति। एतेनाहमीश्वरीयशक्तिसम्पन्नो भवामि।" अनेन प्रकारेण साधको यदि सर्वशक्तिमयेश्वरस्य दिव्यसत्तामात्मन्यावाहयति तदा तस्मिनम्लजाकरूपेणेश्वरीयशक्तिः सञ्चरति। ईश्वरीयशक्त्याः प्रभावात् सोऽविद्यास्मिता-राग-द्वेषाभिनिवेशशून्यो भवति। वस्तुत ईश्वरस्य स्वरूपप्रसङ्गे पतञ्जलिनोक्तम्- "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः।"[2] "अविद्यास्मितारागद्वेषाभि-निवेशाः।"[3] ये क्लेशा अवसादरोगं जनयन्ति, तेषामभावादवसादस्योपशमो भवति। अतोऽवसादरोगस्य चिकित्सायामीश्वरप्रणिधानस्य भूमिका महत्त्वपूर्णेत्यवधेयम्।

## 2. प्रणवोपासनयावसादचिकित्सा

ईश्वरप्रणिधानप्रक्रियावसरे प्रणवस्योपादेयतामनुभूय पतञ्जलिनोक्तं यदीश्वरस्य संक्षिप्तं नाम प्रणवः।[4] ऊँकाररूपस्यास्य प्रणवस्य निरन्तरमुच्चारणं ध्यानावसरे मानसिकपीडामुपशमयति। अत ईश्वरीयध्यानाय ऊँकारमित्यस्य जपः क्रियते। अस्याः प्रक्रियायाः नाम प्रणवोपासना। भ्रामरीप्राणायामावसरे ऊँकारस्य मधुरमुच्चारणमवसन्नं मनः प्रसादमयं करोति।

ऊँकारस्योच्चारणमवसादनिराकरणाय तदा सार्थकं भवति यदा प्राणायामेन सह सोऽहमित्यस्य तत्त्वार्थसाधकस्य मनसि क्रियाशीलो भवति। प्राणायामप्रक्रियायां यदा श्वासस्य ग्रहणं क्रियते, तदा 'सो' इति ध्वनिः सूक्ष्मरूपेणोत्पद्यते। 'सो' इत्यस्य तत्त्वार्थः ईश्वरः। अतः श्वासग्रहणावसरे

---

1. ईश्वरप्रणिधानाद्वा। -(पात.योगसूत्रम् I/23)
2. पात.योगसू. I/24
3. अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः। -(पात.योगगसू.II/3)
4. तस्य वाचकः प्रणवः। -(पात.योगसू.I/27)

सर्वशक्तिमानीश्वरः 'सो' इति ध्वनिना सह साधकस्य शरीराभ्यन्तरमलानांजाकरूपेण प्रविशतीति परिकल्पना क्रियते। अनन्तरं श्वासत्यागसमये 'हम' इति ध्वनिरूत्पद्यते। एतेनावगन्तव्यं यदनेन ध्वनिना सह शरीराभ्यन्तरस्थमङ्गाम्लजानाम् अहङ्कार-भय-क्रोधादिदूषिततत्त्वानि च बहिर्गच्छन्तीति विचारः कर्तव्यः। सोऽहमित्यस्य साधनावसरेऽहंकाराभिमाने च निराकृते 'अयमात्मा ब्रह्म' अहं तस्याः दिव्यशक्त्या अंशोऽस्मि चेति दिव्यज्ञानस्योदयो भवति। आत्मनि ईश्वरीयशक्तेः सञ्चारेण चित्तं भवति। तस्माच्च भयसन्देहादि नकारात्मकदुर्बलभावाः अपसार्यन्ते। दूरीकृते भयादिव्याधि-कारणेऽवसादस्योपशमो भवति।

## 3. प्राणायामेनावसादनिराकरणम्

योगदर्शनानुसारमविद्यादयो ये क्लेशाः चित्तमशुद्धं कुर्वन्ति, तेषां निराकरणाय प्राणायामस्य महत्त्वपूर्णा भूमिका विद्यते। अतः पतञ्जलिनोक्तं यत्प्राणायामस्याभ्यासेन प्रकाशावरकरूपाया अविद्याया आवरणं (विवेकज्ञानस्याच्छादनम्) क्षीयते।[1] एतेनात्मनि विवेकज्ञानस्योदयो भवति। विवेकज्ञानेनात्मविश्वास नाम आत्मशक्तिः वर्द्धते। अनयात्मशक्त्या भयादीनामवसानमवसादविनाशश्च जायते।

## 4. सन्तोषेणावसादचिकित्सा

असन्तोषभावो यथाक्रमं क्रोधस्य मानसिकदुश्चिन्ताया अवसादस्य चान्यतम उत्स इति सततमनुभूयते। अयं नकारात्मकभावः चित्ते क्षोभमुत्पाद्य शरीरस्थप्राणामयकोषमस्थिरं करोति। एतेन शरीराभ्यन्तरे प्राणाः द्रुतगत्या प्रवहन्ति। प्राणानां द्रुतप्रवाहः खलु स्नायुमण्डलमुत्तेजयति। एतेन हृत्पिण्डपाकयन्त्रादिषु विकृतिः जायते। अनेन प्रकारेण सन्तोषाभावः कालक्रमं शरीरं रुग्णं तस्माच्च मनोऽवसन्नं कृत्वा मनुष्यस्य 'असन्तुष्टाः द्विजाः नष्टाः।' वस्तुतोऽसन्तुष्टमनोऽवसादस्य कारणं भूत्वा परोक्षेणात्मविकासमार्गे विघ्नं सृजति। अतोऽवसादस्योपशमनाय पतञ्जलिपादैः सन्तोषभावं समुचितसाधनमित्युद्घोषितम्।[2]

## 5. प्रत्याहारेणावसादनिराकरणम्

एकस्मिन् समये विविधविषयैः सह चित्तसंयोगान्मनो निरन्तरं बहिर्मुखं भवति। तेन मानसिकस्थिरता जायते। यदि दीर्घकालं यावदियमास्थिरता तिष्ठेत्तर्हि मनोऽवसादग्रस्तं भवति। अतोऽवसादस्योपशमनाय इन्द्रियाणि स्वस्वविषयेभ्यः प्रत्याहर्त्तव्यानि। एतेन बहिर्मुखं मनोऽन्तर्मुखं भवति। अस्मिन्नवसरे ईश्वरोपासनया चित्तमीश्वरीयगुणैः संयुक्तं भवेत् । तेनात्मविश्वासः सुदृढो भवति। आत्मविश्वासः मनोबलं द्विगुणितं कृत्वा चित्तं प्रसादयति। पुनश्च प्रत्याहारप्रक्रिया चित्तवृत्तिनियन्त्रणाय सहायिका भवति। यदा चित्तवृत्तयो नियन्त्रिताः संयता वा भवन्ति यदा चित्तं स्थिरं प्रसन्नञ्च भवति। एतेनावसादस्योपशमनं भवति।

---

1. ततः क्षीयते प्रकाशावरणम्। -(पात.योगसू.I/52)
2. सन्तोषादनुत्तमसुखलाभः। -(पात.योग.सू.II/42)

प्रत्याहारप्रक्रिया भवतीति कृत्वा पतञ्जलिना प्रत्याहारविधिं निरूप्योक्तम्- 'स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहार:।'[1]

## 6. प्रसादेनावसादचिकित्सा

अवसादपीडितव्यक्ति: प्रसादस्यास्वादनाय सततमिच्छति, यतो हि प्रसन्नतावसादस्य समुचितोपचारसाधनमिति विदुषामभिमतम्। किन्तु विडम्बनेयं यदवसादाक्रान्तो व्यक्ति: मानसिकभारसाम्याभावाद् वाचाल इव व्यवहरति। आत्मीयै: प्रतिवेशिभिश्च सह कथोपकथनावसरेषु मतपार्थक्यवशाद् यदि भावगतसंघर्षो जायते, तर्हि स आत्मानमपमानितो मूल्यहीनोऽवाञ्छितानाद्यताहतप्रायो मूल्यहीनश्चैवानुभवति। तस्य मनसि भयाशङ्केर्ष्यासूयाघृणाद्वेषपरनिन्दादय: चित्तविक्षेपकारका: यदि मानसिकमला: बहुकालाद् विद्यन्ते, तर्हि व्यवहारगतप्रतिकूलपरिस्थित्या सोऽकस्मादेवाहत: सन्नात्मघातक इवाचरति। तस्य तादृशमानसिकमलानां परिमार्जनेन चित्तं निर्मलं प्रसन्नञ्च भवति। एतदर्थं किं कर्त्तव्यमिति जिज्ञासायां पतञ्जलिमहोदयेन चित्तप्रसन्नकारकं योगसूत्रं प्रणीतम्। तदनुसारं जिज्ञासुसाधक आत्मन ईर्ष्या-घृणासूयाद्वेषतुल्यमानिसिकमलानामपसारणायाधोविध: प्रसादजनको व्यवहारोऽनुसरणीय:।

### (क) ईर्ष्यानिराकरणव्यवहार:

ईर्ष्या चित्तदर्पणं मलिनं करोति। अस्य व्यवहारिकता समाजे परिलक्ष्यते। कस्यचिदपरस्य धनगुणयशादिसमृद्धावस्थामवलोक्य यस्य मनस्यग्निरिव ज्वाला समुत्पद्यते स ईर्ष्याकातर: सन्नतीव क्रोधजर्जरितो भवति। अस्मान्नकारात्मकभावात्तस्य मनस्याहं नीचपतित वेति विचार: समुत्पद्यते। तस्मात् सोऽवसन्नो भवति। एतादृशचित्तगतमालिन्यस्य परिमार्जनाय कमपि सुखसमृद्धं जनं दृष्ट्वा तेन सह मित्रपूर्णव्यवहारं कृत्वा प्रसन्नो भवेत्। वस्तुतोऽपरस्य मित्रस्य सुखमात्मन: सुखमिति विचारणेर्ष्यामलो विनश्यति। मित्रताया औषधीयमूल्यमनुभूय ऋषिभि: यजुर्वेदे साधूक्तम्- ''मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे। मित्रस्य चक्षुषा समीक्षामहे।''[2]

### (ख) घृणानिराकरणव्यवहार:

अन्वेषणपूर्वकं स्वेच्छाकृतपरदोषदर्शनाच्चित्ते घृणाभाव उत्पद्यते। तेन चित्तं मलिनं भवति। अत्यधिको घृणाभाव: चित्तं क्लान्तं करोति। अस्या: घृणाया: परिमार्जनमेवावसादस्योपशमनाय सहायकं भवति। अस्योपायप्रसङ्गे उक्तं यद् दु:खदुर्दशाजर्जरितं जनं प्रति दया प्रदर्शनीया। एतेन घृणाया: विनाशो भवति।

---

1. पात.योग.सूत्रम्-II/54
2. मैत्रीकरणामुदितोपेक्षाणां सुखदु:खपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्। -(पात.योगसू.I/33)

**(ग) असूयानिराकरणव्यवहारः**

कस्यचिदपरस्योन्नतिमवलोक्य यद्यसहिष्णुभावो मनस्युत्पद्यते तर्हि दुष्टव्यक्ति-रून्नतव्यक्तेरनिष्टसाधनाय गुणेषु दोषारोपं करोति। गुणेष्विदं दोषारोपणकार्यमसूयेत्युच्यते। अयमसूयाभावः चित्तमवसादयति। अतोऽवसादचिकित्सायै असूयानिष्कासनमावश्यकम्। एतदर्थं कमपि पुण्यात्मानं जनमवलोक्य मनसि प्रसन्नतामावाहयेत्। अपि च तस्य महात्मनो गुणस्य प्रशंसा कर्त्तव्या। एतेन स्वमनसोऽसूयाभावो विनश्यति।

**(घ) द्वेषनिराकरणव्यवहारः**

यदि कश्चिद् दुष्टव्यक्तिरस्माकमनिष्टं करोति, तर्हि तं प्रति मनसि न केवलं द्वेषभावः समुत्पद्यते, अपि तु तमेव दुर्जनं दण्डयितुमस्माकं मनसि प्रतिहिंसाभाव उपजायते। एतेन चित्तं प्रकुपितं भवति। दीर्घकालं यद्येतादृशद्वेषो मनसि पीडामुत्पादयेत्तर्हि मनोऽवसन्नं भवति। अत एतादृशद्वेषस्य निराकरणाय पापात्मानं दृष्ट्वा तस्योपेक्षा कर्त्तव्येति पतञ्जलिपादैरुक्तम्।

एवं क्रमेण मैत्री-करुण-मुद्रितोपेक्षापूर्णपात्रोचितव्यवहारैः यथाक्रमम् ईर्ष्या-घृणाऽसूयाद्वेषतुल्यचित्त-गतमलानां परिमार्जनाच्चित्तं प्रसन्नं भवति।[1] चित्ते प्रसन्नतायाः प्रसादस्य वावस्थानेनावसादस्योपशमनं भवति।

एवं क्रमेण योगपद्धत्यावसादस्य चिकित्सा कर्त्तव्या। एतेन मानसिकस्वास्थ्यस्य शारीरिकस्वास्थ्यस्य च सुरक्षा भवति। उपर्युक्तरीत्या योगसूत्राणां प्रयोगेणावसादचिकित्सायां योगस्य भूमिकावगन्तव्या।

1. यजु. 36/98

ISSN - 0974-8946
अक्टूबर-दिसम्बर 2017

शोधप्रभा
वर्षः 42, चतुर्थोऽङ्कः

# वास्तुशास्त्रदृष्ट्या गृहमेलापकादौ विचारः

श्रीगणेशदत्तचतुर्वेदी*

**मेलपकादौ नामराशिप्रधानत्वम्**

देशग्रामगृहज्वरव्यवहृतिषु दाने मनौ।
सेवाकाकिणिवर्गसङ्गरपुनर्भूमेलके नामभम्॥[1]

देशग्रामगृहज्वरव्यवहारदानमन्त्रसेवाकाकिणीवर्गशुद्धिसंग्रामपुनर्विवाहेषु नामराशिद्वारा एव विचारः कार्यः।

**गृहमेलनादौ राशिज्ञाने विशेषः**

अश्विन्यादित्रयं मेषे सिंहे प्रोक्तं मघात्रयम्।
मूलादित्रितयं चापि शेषभेषु द्वयं द्वयम्॥[2]

अश्विन्यादित्रयं मेषराशौ मघादित्रयं सिंहराशौ, मूलादित्रयं धनुराशौ, शिष्टराशयः नक्षत्रद्वययुक्ताः भवन्ति। इदमपि मेलनं विवाहवत् कार्यम्।

**ग्रहनक्षत्रविचारः**

त्रिभिस्त्रिभिर्वेश्मनि कृतिकाद्यैरुद्वेगपुत्राप्तिधनाप्तिशोकम्।
शत्रोर्भयं राजभयं च मृत्युः सुखं प्रवासश्च नवप्रभेदाः॥[3]

गृहनक्षत्रविचारे कृतिकादिनक्षत्रात् गणना क्रियते। कृतिकादित्रयं उद्वेगः, आर्द्रादित्रयं सन्ततिप्राप्तिः, आश्लेषादित्रयं धनप्राप्तिः, उत्तराफाल्गुन्यादित्रयं शोकः, स्वात्यादित्रयं शत्रुभयं, ज्येष्ठादित्रयं राजभयं, उत्तराषाढादित्रयं मृत्युः, शतभिषादित्रयं सुखं, रेवत्यादित्रयं प्रवासं भवति। चक्रेण स्पष्टं भवति।

---

* शोधच्छात्रः, वास्तुशास्त्रविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

1. बृहद्वास्तुमाला गणनाविचारः श्लो. 1
2. तत्रैव श्लो. 2
3. बृहद्वास्तुमाला गणनाविचारः पृ. 63 श्लो. 3

**स्पष्टार्थं चक्रम्**

| गृहनक्षत्राणि | कृति. रोहि. मृग. | आर्द्रा पुन. पुष्य | आश्ले. मघा पू. फा. | उ. फा. हस्त चित्रा | स्वाती विशाखा अनुराधा | ज्येष्ठा मूल पू. षा. | उ. षा. श्रवणा घनिष्ठा | शत. पू. भा. उ. भा. | रे. अ. भ. |
|---|---|---|---|---|---|---|---|---|---|
| फलानि | उद्वेगः | पुत्र | धन | शोकः | शत्रु | राज | मृत्युः | सुखम् | प्रवासः |
| | | प्राप्तिः | प्राप्तिः | | भयम् | भयम् | | | |

**रामदैवज्ञमते योनिविचारः**

अश्विन्यम्बुपयोर्हयो निगदितः स्वात्यर्कयोः कासरः।
सिंहो वस्वजपाद्भयोस्समुदितो याम्यान्त्ययोः कुञ्जरः॥

मेषो देवपुरोहिताऽनलभयोः कर्णाम्बुनोर्वानरः।
स्याद्वैश्वाभिजितोस्तथैव नकुलश्चान्द्राब्जयोऽन्योरहिः॥

ज्येष्ठामैत्रभयोः कुरङ्ग उदितो मूलार्द्रयोः श्वा तथा
मार्जारोऽदितिसार्पयोरथ मघायोन्योस्तथैवोन्दुरुः।
व्याघ्रो द्वीशभचित्रयोरपि च गौरर्यम्णबुधन्यर्क्षयो-
योनिः पादगयोः परस्परमहावैरं भयोऽन्त्यस्त्यजेत्॥[1]

एताः नक्षत्रयोनयः अश्विनीशतभिषानक्षत्रयोः अश्वः, स्वातीहस्तनक्षत्रयोः महिषः, घनिष्ठापूर्वाभाद्रपदयोः सिंहः, भरणीरेवत्योः गजः, पुष्यकृतिकयोः मेषः, श्रवणपूर्वाषाढयोः वानरः, उत्तराषाढाभिजितो नकुलः, मृगशिरो रोहिण्योः सर्पः, ज्येष्ठानुराधयोः हरिणः, मूलाद्रयोः श्वानः, पुनर्वस्वाश्लेषयोः बिडालः, मघापूर्वफाल्गुन्योः मूषकः, विशाखाचित्रयोः व्याघ्रः, उत्तराफाल्गुन्युत्तरभाद्रपदयोः गौः योनिः। पूर्व- पश्चात् योनयोर्मध्ये महावैरं सञ्जातः। अतः सर्वथा त्याज्यं करणीयम्।

**चक्रेण स्पष्टं भवति**

| नक्षत्राणि | अश्वि. शत. | स्वाती हस्त | घनि. पू.भा. | भरणी रेवती | पुष्य कृतिका | श्रवणा पूं.षा | उ. षा. अभि. | रोहि. मृग. | अनु. ज्येष्ठा | मूल आर्द्रा | पुन. श्ले | मघा पू.फा. | चित्रा विशाखा | उ. फा. उ. भा. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| योनयः | हयः | महिषः | सिंहः | गजः | मेषः | वानरः | नकुलः | सर्पः | मृगः | श्वानः | मार्जारः | मूषकः | व्याघ्रः | गौः |
| वैरः | वैरम् | | वैरम् | | वैरम् | | वैरम् | | वैरम् | | वैरम् | | वैरम् | |

---

1. वृ. वा. मा. पृ. 64 श्लो. 4-5

**नाडीविचारः**

**सेव्यसेवकयोश्चैव गृहतत्स्वामिनोरपि।**
**परस्परं मित्रयोश्च एकनाडी प्रशस्यते।।[1]**

अन्यच्च -

**प्रभुपण्यङ्गना मित्रं देशं ग्रामं पुरं गृहम्।**
**नाडीविद्धं मतं श्रेष्ठं न शुभं वेधवर्जितम्।।[2]**

स्वामी-क्रीतास्त्री-मित्र-देश-ग्राम-पुर-गृहादिषु नाडी विचारयेत्। द्वयोः एका नाडी शुभा विपरीतम् अशुभम्।

**एकनाडी स्थिता यत्र गुरुमन्त्राश्च देवताः।**
**तत्र द्वेषं रुजं मृत्युं क्रमेण फलमादिशेत्।।[3]**

यदि गुरुः मन्त्रः तथा देवता त्रयो एकनाडी प्रवर्तते तदा क्रमशः द्वेषः रागः एवं मृत्युः भवति।

**आवृत्तिभिर्भैस्त्रिभिरश्विभाद्यं क्रमोत्क्रमात् सङ्गणयेदुडूनि।**
**यदेकपर्वण्युभयोश्च हर्म्यं हर्म्ये शयोर्भेऽति शुभं तदा स्यात्।।[4]**

उक्तनाडीविचारः गृहनक्षत्रानुसारं गृहस्वामीनक्षत्रानुसारं वा क्रियते। गृह- गृहस्वामिनो आदिमध्यान्त्येषु क्वचित् एका नाडी भवति तदा शुभा। नाडीविचारे नक्षत्रक्रमः सर्पाकारो भवति चक्रेण स्पष्टं भवति।

**नाडीचक्रम्**

| आदि | अश्वि. | आर्द्रा | पुन. | उ. फा. | हस्त | ज्ये. | मूल | शत | पू. फा. |
|---|---|---|---|---|---|---|---|---|---|
| मध्य | भरणी | मृग | पुष्य | पू. फा. | चित्रा | अनु. | पू. षा. | धनि. | उ. भा. |
| अन्त्य | कृतिका | रो. | आश्लेषा | मघा | स्वाती | विशाखा | उ. षा. | श्रवण | रेवती |

यथा क्षीरार्णवे -

**त्रयनाड्यात्मकं चक्रं सर्पाकारस्वरूपकम्।**
**नवभागाङ्कितं कुर्यादश्विन्यादित्रिकं लिखेत्।।**

1. वास्तुमण्डनम् द्वितीयोऽध्यायः श्लो. 72
2. वास्तुमण्डनम् द्वितीयोऽध्यायः श्लो. 70
3. वास्तुमण्डनम् द्वितीयोऽध्यायः श्लो. 71
4. वृ. वा. मा. पृ. 66 श्लो. 8

एकनाडीस्थितं तस्मिन्नक्षत्रं चेद् वरकन्ययोः।
तेन मरणं विजानियादंशतश्चेत् स्थिरं त्यजेत्॥

स्वामीसेवकमित्राणां गृहाणां गृहस्वामिनाम्।
राज्ञस्तथा पौराणां च नाडीवेधः सुखावहः॥[1]

**तिथ्यानयनम्**

गृहपिण्डं गजैर्हत्वा तिथिभिर्भागमाहरेत्।
शेषं चात्र तिथिर्ज्ञेया वास्तुशास्त्रविशारदैः॥

शक्राहतं क्षेत्रफलं त्रिंशद्भक्तावशेषकम्।
तिथिः प्रतिपदादिस्याद्दर्शरिक्तां विवर्जयेत्॥[2]

गृहपिण्डं अष्टभिः हत्वा पञ्चदशभिर्भाजने अवशष्टसंख्यातुल्या तिथिरुच्यते। अन्येषामाचार्याणां मतेन गृहपिण्डं चतुर्दशभिर्हत्वा त्रिंशता भाजने यच्छेषं तत् शुक्लपक्षात् प्रथमादितिथ्यो भवन्ति। अत्र रिक्तादर्शौ वर्जनीयौ।

**मयानुसारेण वारं च तिथ्यानयनम् —**

मयस्य च मताद्वारतिथ्यानयनमुच्यते।
दैर्घ्यष्टघ्ने पृथक्-भागैः सप्तभिः स्त्रिंशताह्यते॥

शेषाः सूर्यादयो वारास्तिथयुग्मपक्षजाः।
भौमार्का च तिथिः रिक्ता यमीत्यादौ मृतिं त्यजेत्॥[3]

मयानुसारेण गृहपिण्डं अष्टभिः संगुण्य सप्तभिः भाजते यत् शिष्यते क्रमानुसारेण सूर्यादिवाराः भवन्ति। अनेन प्रकारेण गृहपिण्डम् अष्टभिः हत्वा त्रिंशत् भाजनेन तिथ्यादयः भवन्ति। भौम रवि रिक्तादिः तिथिः मृत्युकारकाः यमतुल्यकष्टं ददाति। अतः सर्वथा वर्जनीया सूत्रेण स्पष्टं भवति–

$$\text{विस्तारः} \times \text{दैर्घ्यं} \times \frac{8}{30} = \text{तिथिः}$$

वारस्य सूत्रम् गृहापिण्डं $\frac{(\underline{\text{विस्तारः}}\times\underline{\text{दैर्घ्यं}})\times 8}{7}$ = वारः

1. क्षीरार्णव 1/31–33
2. वृ. वा. मा. पृ. 70 श्लो. 25–26
3. उद्धृतं वास्तुमण्डनम् द्वितीयोऽध्यायः श्लो. 79–80

वाशिष्ठसंहितायामपि वर्णनं प्राप्यते –

**परेषु शुभदं गेहं सर्वं तत्कर्तृराशितः।**
**सूर्यारवारराश्यंशाः सदा वह्निभयप्रदा॥**

**शेषां ग्रहाणां राश्यंशाः कर्तरिष्टार्थासिद्धिदाः।**
**तस्मात्सर्वं परीक्ष्यैतद्वदेज्ज्योतिषिकः सदा॥**[1]

**योगानयनम्**

**गृहपिण्डं युगैर्हत्वा भक्ता नक्षत्रसंख्यया।**
**विष्कम्भादि युतिर्ज्ञेया नामतुल्यं फलं विदुः॥**

**अतिगण्डो धृतिश्शूलगंडव्याघातवज्रकाः।**
**परिघश्च व्यतीपातः वैधृतिर्वर्जिता गृहे॥**[2]

गृहपिण्डं चतुर्भिहत्वा सप्तविंशत्या भाजने शेषं यत्तद् क्रमशः विष्कुम्भादि योगाः भवन्ति। एतत्फलं चैतन्नामानुरूपं भवति। एषु अतिगण्डधृतिशूलगण्डव्याघात– वज्रपरिघव्यतीपातवैधृतियोगाः गृहकर्मणि निषिद्धाः।

**अन्यच्च फलविशेषः**

**कुयोगे धनधान्यादिनाशः पातश्च मृत्युदः।**
**वैधृती सर्वनाशाय नक्षत्रैक्ये तथैव च॥**[3]

उपर्युक्तकुयोगे धनधान्यादिनाशः (पातश्च) व्यतीपातयोगे मृत्युः वैधृतीयोगे सर्वनाशः तथा गृहस्वामिनः गृहस्य च नक्षत्रैक्ये अपि सर्वनाशः ज्ञेयः।

**गृहायुः आनयनम्**

**गृहस्य पिण्डं करिभिर्विगुण्यं विभाजितं शून्यदिवाकरेण।**
**यच्छेषमायुः कथितं मुनीन्द्रैरायुष्यपूर्णे भवने शुभं स्यात्॥**[4]

गृहपिण्डम् अष्टभिः हत्वा विंशत्यधिकशतेन विभाजिते सति यच्छेषं तद् गृहस्य आयुर्भवति। यावत्पर्यन्तमायुरवधिः शिष्टः तावद् गृहं शुभं भवति। पूर्णायुगृहं शुभं भवति।

---

1. वशिष्ठसंहिता अ. 39 श्लो. 56–57
2. वास्तुसारः पृ. 121 श्लो. 98–99
3. उद्धृतं वास्तुसारः श्लो. 100
4. वृ. वा. भा. पृ. 71 श्लो. 101

**गृहविनाशे हेतुविचारः**

> हस्तात्मकं क्षेत्रफलं गजाहतं संवत्सरैर्भाजितलब्धकं यत्।
> तत्खेन्दुगुण्यं भवनं हिजीवितं यच्छेषितं भूतहृतं विलीयते॥
>
> पृथिव्यापोऽनलो वायुराकाश इति पञ्चभिः।
> गृहस्यायुषि सम्पूर्णे विनाशो भवति ध्रुवम्॥

गृहस्य पूर्णायुषि सति गृहस्य नाशः सम्भाव्यते। अतः गृहस्यायुः कियन्मितः इति ज्ञानार्थमायासः क्रियते। क्षेत्रफल अष्टभिर्हत्वा षष्ठ्या विभाजिते यल्लब्धं तद् दशभिर्हत्वा शेषं प्राप्नुयात्। तदेव शेषं गृहायुः। तत्र पञ्चभिः भाजने यच्छेषं तत्क्रमेण पृथिव्यापतेजोवाय्वाकाशजन्यदोषैः गृहं नश्यति विकृतं वा भवति।

> जीर्णं पतति भूतत्वे तोयाग्न्योः स्यात्तदुद्भवम्।
> वायौ रोगस्तथाऽऽकाशे शून्यतामेति मन्दिरम्॥[1]

**प्रकारान्तरेण गृहस्य आयुः साधनम्**

> तिथ्यास्त्रिनिघ्नाश्च शरघ्नवारा वेदघ्नयोगाश्च रसघ्नभानि।
> कृत्वैकपिण्डं खगजैर्विभक्तं शेषं समाव्यूहमितं तदायुः॥[2]

तिथिसंख्या त्रिभिः वारसंख्या पञ्चभिः योगसंख्या चतुर्भिः नक्षत्रसंख्या षडभिः गुणयित्वा संयोज्य अशीतीसंख्यया विभाजनेन यत् शिष्टं तद् गृहायुः भवति।

**फलम्**

> आयुर्विहीने गेहे तु दुर्भगत्वं प्रजायते[3]

व्यमानयनम् (रामदैवज्ञमते विशेषः)

> भं नागतष्टं व्यय ईरितोऽसौ ध्रुवादिनामाक्षरयुक् सपिण्डः।
> तष्टो गुणैरिन्द्रकृतातभूपा ह्यंशा भवेयुर्न शुभोऽन्तकोऽत्र॥[4]

पिण्डनक्षत्रं अष्टभिः विभज्य प्राप्ता लब्धिः व्ययः इत्युच्यते। तत्र ध्रुवादिनामाक्षरं पिण्डसंख्याश्च

---

1. वा. सा. पृ. 123 श्लो. 112
2. उद्धृतं वा. सा श्लो. 113
3. तथैव श्लो. 114
4. वृ. वा. मा. पृ. 73 श्लो. 40

योजयेत्। अमुं च त्रिभिर्भाजयेत्। एकशेषे इन्द्रांश: द्विशेषे यमांश: त्रिशेषं राजांश: भवति। एषु राजांश: इन्द्रांशश्च शुभो भवति, यमांशश्च अशुभो भवति।

**प्रकारान्तरेण वास्तुशास्त्रीयमतम्**

**आयान्न्यूनतर: पक्षो व्ययस्यैषा विचारणा**
**मूलराशौ व्यये क्षिप्ते गृहनामाक्षरैर्युते।**
**ततो हरेत्रिभिर्भागं यच्छेषं सोऽशको भवेत्।**
**इन्द्रो यमश्च राजस्याद्यमांशो नैव शोभना:।।[1]**

आयात् न्यूने व्यये तस्मिन् गृहे वासो नोचित:। क्षेत्रफले व्ययं गृहपतिनामाक्षराणि च संयोज्य तत्र त्रिभिर्भाजने शेषं यत्तत्क्रमेण एकशेषे इन्द्रांश:, द्विशेषे यमांश:, त्रिशेषे च राजांश: ज्ञेय:। एषु यमांश: अशुभो भवति।

**टोडरानन्दमते विचार: -**

**नक्षत्रे चाष्टभिर्भक्ते योऽङ्क: स स्याद्गृहे व्यय:।**
**पैशाचस्तु समाये स्याद्राक्षसोऽप्यधिके व्यये।।[2]**

पिण्डगतनक्षत्रसंख्याया अष्टभिर्भाजने व्यय: प्राप्यते। आये व्यये च समाने सति तद् गृहं पिशाच इति संज्ञको भवति। व्यये अधिके राक्षस इति भवति। विषयेऽस्मिन् नारायणभट्ट: स्वमतमाह - **'ऋक्षे सर्पहृते व्ययौ गृहमसत् स्वल्पायभूरिव्ययम्'**

**गृहपिण्डानुसारेण मण्डलज्ञानम्**

**स्वामीहस्तप्रमाणेन दीर्घविस्तारसंयुतम्।**
**नवभिस्तु हरेद्भागं शेषं मण्डलमुच्यते।।**

**दाता च भूपतिश्चैव क्लीवश्चौरो विचक्षण:।**
**षष्ठो भोगी धनाढ्यश्च दरिद्रो धनदस्तथा।।[3]**

गृहपतिहस्तप्रमाणेन दीर्घविस्तारयो: गुणनेन यत् प्राप्तं नवभि: भाजने शेषं मण्डलमुच्यते। एकशेषे दाता, द्विशेषे भूपति:, त्रिशेषे नपुंसक: चतुश्शेषे चौर:, पञ्चशेषे विचक्षण:, षट्शेषे भोगी, सप्तशेषे धनी, अष्टशेषे दरिद्र: नवशेषे कुबेरतुल्य: भवति।

---

1. वृ. वा. मा. पृ. 73 श्लो. 41
2. तथैव श्लो. 42
3. वृ. वा. मा. पृ. 71 श्लो. 32-33

**मतान्तरेण**

> **चरणात् कर्णपर्यन्तं दण्डं सरलवंशजम्।**
> **पूर्वतः पश्चिमं यावदुत्तराद्दक्षिणां तथा॥**
>
> **तयोश्च दण्डयोर्योगं कृत्वा भूमौ विलिख्यताम्।**
> **अष्टभिश्च हरेद्भागं शेषाङ्को न शुभाशुभम्॥**
>
> **प्रथमं रजकस्थानं चन्द्रवत् फलमादिशेत्।**
> **द्वितीयं चर्मकारस्य क्षुत्पिपासाकुलो गृही॥**
>
> **तृतीयं ब्राह्मणस्थानं जनोद्वासकरं महत्।**
> **चतुर्थे शूद्रकस्थानं धनधान्यप्रदायकम्॥**
>
> **पञ्चमे योगिनः स्थानं महदौदास्यकारकम्।**
> **षष्ठे तु गोपकस्थानं सर्वसिद्धिप्रदायकम्॥**
>
> **सप्तमे क्षत्रियस्थानं सदा युद्धकरं नृणाम्।**
> **अष्टमं च क्रियास्थानं मरणं रोगकारकम्॥**[1]

गृहपतेः पादाङ्गुष्ठात् कर्णपर्यन्तं ऋजुवंशदण्डेन मानं स्वीकृत्य तेन दण्डेन पूर्वतः पश्चिमम् उत्तरतश्च दक्षिणं यावत् भूमिं मापयेत्। तयोः गुणनं फलं अष्टभिर्भाजयित्वा प्राप्तशेषानुसारं फलाफलनिर्णयः कर्तव्यः। एकशेषे रजकस्थानं तत्र धनं चन्द्रवत् वृद्धिक्षययुक्तं फलं भवति। द्विशेषे चर्मकारस्थानं वासकर्तुः अतृप्तिः भवति। त्रिशेषे ब्राह्मणस्थानं उद्वेगकरं चतुश्शेषे शूद्रस्थानं धनधान्यकरं पञ्चशेषे योगिनीस्थानं औदास्यकरं षट्शेषे गोपस्थानं सर्वसिद्धिकरं सप्तशेषे क्षत्रियत्रस्थानं युद्धकरम् अष्टशेषे क्रियास्थानं यत्तुरोगमृत्युकरं भवति।

**शालाध्रुवाङ्कनयनप्रकारः**

> **दिक्षु पूर्वादितः शाला ध्रुवा भूद्वौ कृता गजाः।**
> **शालाध्रुवाङ्कसंयोगः सैको वेश्मध्रुवादिकम्॥**
>
> **ध्रुवा धान्यं जयं नन्दं खरं कान्तं मनोरमम्।**
> **सुमुखं दुर्मुखं क्रूरं रिपुदं धनदं क्षयम्॥**
>
> **आक्रन्दं विपुलं चैव विजयं चेति षोडशाः।**
> **गृहनामानि शास्त्रेऽस्मिन् समाख्यातानि सूरिभिः॥**[2]

---

1. वृ. वा मा. पृ. 72 श्लो. 34-39
2. वृ. वा. मा. पृ. 74 श्लो. 43-44

पूर्वद्वारे दक्षिणे पश्चिमे उत्तरे च द्वारे क्रमेण शालाध्रुवाङ्काः एक-द्वि-चतुः अष्टसंख्यात्मकाः भवन्ति। यावन्ति द्वाराणि गृहे निर्मातव्यानि तावन्तः ध्रुवादिशालानां भवति।

षोडशगृहनामानि इमानि ध्रुवधान्यजयनन्दखरकान्तमनोरमसुमुखदुर्मुखक्रूररिपुदधनदक्षयाक्रन्दविपुल विजयाख्यानि।

**प्रकारान्तरेण**

चतुर्भिर्गुणितस्य क्षेत्रस्य फलं षोडशभिर्भजेत् यच्छेषमायाति तेन क्रमेण ध्रुवादि षोडश गृहाणि जानीयात्। ध्रुवं धान्यं जयं नन्दं खरं कान्तं मनोहरम् सुमुखं दुर्मुखं क्रूरं सुपक्षं धनदं क्षयम् आक्रन्दं विपुलं विजयम् एतानि अलिन्दभेदेन षोडशनामानि क्षेत्रस्य भवन्ति। प्रत्येकं यथानामानि सन्ति तथा गुणान्यपि सन्ति।[1]

**अन्यच्च**

> **वेदघ्नपिण्डे नृपभाजिते च**
> **शेषं भवेन्नाम ध्रुवादिकं च।**
> **पिण्डं चतुर्भिर्गुणितस्य षोडशभिः**
> **भाजनेन यद् शेषं ध्रुवादिगृहं भवति।।**[2]

**उदाहरणम्**

पिण्डसंख्या 687 चतुर्मिर्गुणनेन 687 × 4 = 2748

16 षोडशभि भक्तेन 2748 ÷ 16 = लब्धि 171 शेषम् 12

अतः ध्रुवादिगृहेषु धननामकं गृहं भवति।

अतः अत्र पिण्डं चतुर्भिः गुणयित्वा षोडशभिः भाजनेन शिष्यते 4, 8, 12, 16 संख्यानुसारेण ध्रुवादिगृहाणां नामानि भवन्ति।

**अंशानयनम्**

> **व्ययान्विते क्षेत्रफले गृहस्य ध्रुवादिनामाक्षरामिश्रिते च।**
> **त्रिभिर्विभक्ते क्रमशोंशकः स्यादिन्द्रो यमो भूपतिरन्तकोऽसन्।।**[3]

व्ययसंख्या पिण्डस्य क्षेत्रफले संयोज्य ध्रुवादिगृहस्य नामाक्षरसंख्या अपि योजनीयं यत् फलं त्रिभिः भक्तेन एकादिसंख्या क्रमेण इन्द्र-यम-भूपानाम्-अंशाः भवन्ति। यमांशगृहं शुभं न भवति।

1. वास्तुशास्त्रविमर्शः द्वितीयपरिच्छेदः पृ. 67
2. उद्धृतं वा. सा. श्लो. 120 (वा र मा 17/6-7)
3. वा. सा. पृ. 125 श्लो. 117

उदाहरणम् - क्षेत्रफलम् 687 व्ययसंख्या 7 ध्रुवादिनामसंख्या 2

687+7+2+=693÷3 शेषं 3 अतः भूपांशः भवति।

**फलविशेषः**

**इन्द्रांशे पदवीवृद्धिर्महत्सौख्यं प्रजायते।**
**यमांशे मरणं नूनं रोगशोकमनेकधा।।**
**राजांशे धनधान्याप्तिः पुत्रवृद्धिश्च जायते।।[1]**

इन्द्रांशे गृहेशस्य पदवृद्धि अधिसौख्यं च भवति। यमांशे मृत्युरोगशोकाद्यनेक- कष्टानि भवन्ति। भूपांशः धनधान्यलाभं पुत्रवृद्धिं च करोति।

**गृहच्छायाज्ञानम्**

**दीर्घत्वं च पृथुत्वेन गुणयेन्नवभिर्भजेत्।**
**शेषे छायां विजानीयादुदयाचलमादितः।।**

**उदयोऽस्ताचलश्चैव हिमविन्ध्याचलौ तथा।**
**इन्द्रनारदधूमश्च कूर्मकौबेरयो क्रमात्।।[2]**

पिण्डस्य दीर्घविस्तारयोर्गुणनं नवभिः भक्तेन एकादिशेषानुसारेण छाया ज्ञेया। यथा- एकशेषे उदयाचलस्य छाया, द्विशेषे अस्ताचलस्य छाया त्रिशेषे हिमाचलस्य छाया, चतुश्शेषे विन्ध्याचलस्य छाया, पञ्चमशेषे इन्द्रपर्वस्य छाया, षट्शेषे नारदपर्वतस्य छाया, सप्तशेषे धूमाचलस्य छाया अष्टं शेषे कूर्माचलस्य छाया, शून्यशेषे कुबेराचलस्य छाया भवति।

**आङ्गणविचारः**

**दीर्घविस्तारयोरैक्यं चन्द्रैश्च गुणितं तथा।**
**नवभिस्तु हरेद्भागं शेषमजिरमुच्यते।।**

**दाता विचक्षणो भीरुः कलहो नृपदानवौ।**
**क्लीबश्चौरो धनी चेति नामतुल्यं फलं स्मृतम्।।[3]**

अङ्गणस्य दीर्घविस्तारौ योजयित्वा एकेन गुणितेन नवभिः भक्तेन च एकशेषे दाता द्विशेषे विचक्षणः, त्रिशेषे यभीरुः चतुश्शेषे कलहः पञ्चशेषे नृपः षष्ठशेषं दानवः सप्तशषे नपुंसकः अष्टशेषे चौरः नवमशेषे धनीज्ञेय नामतुल्येन फलं भवति।

---

1. वा. सा. पृ. 125 श्लो. 118
2. वा. र. 5/72-73
3. वास्तुरत्नाकर अ. 5 श्लो. 88-89

अन्यच्च

दीर्घविस्तारहस्तैक्यं वसुभिर्गुणितं तथा।
नवभिर्भाजितं शेषं वदेद् गेहाङ्गणं सुधीः॥

तस्कर भोगी विचक्षणा दाता नृपतिर्नपुंसको धनदः।
दरिद्रो भयदाता नामसमानाः फलप्रदास्ते स्युः॥[1]

अङ्गणशुभाशुभत्वम्

मध्ये निम्नं त्वङ्गणाग्रं तथोच्चैः
शश्वच्चैवं पुत्रनाशाय गेहम्॥[2]

अङ्गणस्य मध्ये निम्नं तथा चतुर्दिक्षु उन्नते सति पुत्रनाशं करोति। एतद् विपरीते (अर्थात् मध्ये उच्चं चतुर्दिक्षु निम्ने अङ्गणं शुभं फलं ददाति।

सम्यग्रूपेण शुभाशुभत्वं विचार्य गृहं विधेयम्।

बहुगुणं लघुदोषसमन्वितं भवनदेवगृहादिकमिष्यते।
जलप्लवेन शिखी बहुतापवान्न शमयेति गुणैरधिको यतः॥[3]

अनेन विधिना गृहदोषगुणादिकसम्यग्रूपेण विचार्य अधिकगुणयुक्तं न्यूनदोषसंयुक्तभवनं देवशमयतिलयादिनिर्माणं शुभकारकमस्ति यथा बहुप्रज्वलिताग्निः न्यूनजलेन न शमयति तथैव भवने गुणाधिक्यं भवेत्। यथा ज्योतिर्निबन्धने –

अल्पदोषं बहुगुणं दोषाय न भवेद् गृहम्।

---

1. तत्रैव श्लो. 90–91
2. वास्तुरत्नाकर अध्याय 5 श्लो. 92
3 वास्तुराज ..... 3/27

ISSN - 0974-8946
अक्टूबर-दिसम्बर 2017
शोधप्रभा
वर्षः 42, चतुर्थोऽङ्कः

# पञ्चतन्त्र की विश्वयात्रा के कुछ मुख्य पड़ाव

डॉ. बलराम शुक्ल*

एकस्य तिष्ठति कवेर्गृह एव काव्यम्, अन्यस्य गच्छति सुहृद्भवनानि यावत्।
न्यस्याविदग्धवदनेषु पदानि शश्वत्, कस्यापि सञ्चरति विश्वकुतूहलीव॥
(काव्यमीमांसा 4)

(किसी कवि की कविता उसके घर तक ही रह जाती है जबकि किसी की कविता मित्रों के घरों तक चली जाती है। लेकिन किसी किसी की कविता अरसिकों के मुखों पर पैर रखकर ऐसे निकल पड़ती है मानों उसे पूरे विश्व का भ्रमण करने की इच्छा हो।)

ईसा पूर्व तीसरी शताब्दी के लगभग संकलित पञ्चतन्त्र ग्रन्थ कथा-साहित्य के विश्व में भ्रमण का अपूर्व उदाहरण है। पञ्चतन्त्र एक ऐसा भारतीय ग्रन्थ है जिसके सर्वाधिक साहित्यिक अनुवाद तथा रूपान्तर हुए हैं। इस ग्रन्थ के 50 भाषाओं में लगभग 200 संस्करण उपलब्ध हैं। इनमें से तीन चौथाई संस्करण ऐसी भाषाओं में हैं जो संस्कृत नहीं हैं। केवल भारत में ही इस ग्रन्थ के 25 विभिन्न संस्करण मिलते हैं।[1] इनमें तन्त्राख्यायिका से लेकर हितोपदेश तक सम्मिलित हैं। अपने विभिन्न भारतीय संस्करणों के अलावा पञ्चतन्त्र का पूरी दुनिया में भ्रमण भारतविद्या के शोधकर्ताओं के बीच एक चर्चित विषय रहा है। प्रस्तुत शोधपत्र में पञ्चतन्त्र के कुछ प्रमुख वैश्विक संस्करणों तथा उनकी विशेषताओं पर संक्षिप्त चर्चा की गयी है।

इस चर्चा में सबसे पहले हम भारतवर्ष में विभिन्न कालखण्डों में हुए पञ्चतन्त्र के प्रमुख संस्करणों पर दृष्टि डालते हैं। विद्वानों ने प्राचीन भारत में प्रसारित पञ्चतन्त्र की विभिन्न शाखाओं को चार प्रमुख समूहों में वर्गीकृत किया है। पञ्चतन्त्र का सबसे प्राचीन स्वरूप सम्भवतः तन्त्राख्यायिका है (Dasgupta 1947 : 90)। यह वही पाठ है जिससे पहलवी अनुवाद किया गया होगा। सोमदेव के कथासरित्सागर तथा क्षेमेन्द्र की बृहत्कथामञ्जरी में जिस पञ्चतन्त्र की कथाओं का उपयोग किया गया था वह उसका उत्तर-पश्चिम पाठ रहा होगा जो अब उपलब्ध नहीं होता।

* सहायकाचार्य, संस्कृत विभग, दिल्ली विश्वविद्यालय, दिल्ली - 110007

1. विशेष विवरण के लिए देखें-'रूमी की कीमियागरी: पंचतन्त्र की नैतिक कहानियों का आध्यात्मिक संस्करण' बलराम शुक्ल, जन.-जून, 2017 प्रतिमान (Pratiman): Samay, Samaj, Sanskriti; CSDS (Centre for the Studies of Developing Societies).
2. The Pañcatantra stories among Jains : versions, peculiarities and usages – NALINI BALBIR (Abstract of the paper)

जैनों के कथा साहित्य में पञ्चतन्त्र की कहानियाँ मुख्यतः दो रूपों में उपस्थित दिखायी देती हैं। उन्होंने संस्कृत भाषा में पञ्चतन्त्र के पूरे संस्करण प्रस्तुत किये जिसमें सबसे प्रसिद्ध है 1199 ई० में विद्यमान जैनाचार्य पूर्णभद्र का पञ्चाख्यान नामक परिवर्धित संस्करण। एस० एन० दासगुप्त के अनुसार पञ्चाख्यान पञ्चतन्त्र के दाक्षिणात्य संस्करण पर आधारित रहा होगा। पञ्चतन्त्र की कथायें जैन धर्मशास्त्रीय ग्रन्थों की व्याख्याओं में भी बिखरी पड़ी हैं। ये कथाएँ प्राकृत भाषा में लिखी गयी हैं और इनका समय कम से कम 6ठीं शताब्दी इस्वी होना चाहिए । प्राकृत की ये कथाएँ जैन ग्रन्थों में प्रयुक्त होने के बावजूद अपने मूल स्वरूप को सुरक्षित रखती हैं। । पञ्चतन्त्र का सबसे नवीन तथा परिवर्तित एवं परिवर्धित संस्करण नारायण पण्डित का हितोपदेश है। नारायण बंगाल के राजा धवलचन्द्र के आश्रित थे जिनका समय 1373 ई० है।

पञ्चतन्त्र की विश्वयात्रा उसके प्राचीन फ़ारसी अनुवाद के साथ शुरू होती है। फ़ारसी तथा अरबी जगत् में पञ्चतन्त्र कलीलः व दिम्नः[1] के नाम से रूपान्तरित एवं प्रख्यात है । 570 ईस्वी में सासानी सम्राट् अनूशीरवान् के मन्त्री बुज़ुर्गमेह्र ने बरजवै तबीब के माध्यम से इस ग्रन्थ का अनुवाद पहलवी (मध्यकालीन फ़ारसी) भाषा में कराया। पहलवी में इसका नाम कलीलग व दिम्नग था। यही अनुवाद पञ्चतन्त्र के सीरियन तथा अन्य विश्वभाषाओं में हुए अनुवादों का आधार बना । 750 ईस्वी वर्ष में फ़ारसी विद्वान् अब्दुल्लाह इब्ने मुकफ्फा ने इसका अनुवाद अरबी भाषा में किया । 12 वीं सदी में गजनवी शासक बहराम शाह के यहां मुंशीपद पर कार्यरत नसरुल्लाह ने इसका नवीन फ़ारसी में अनुवाद किया। इसका नाम भी कलीलः व दिम्नः ही है। यह अनुवाद मूल की अपेक्षा बहुत परिवर्धित है। फ़ारसी का यह अनुवाद अनवारे सुहैली आदि अनेक दूसरे रूपान्तरणों का आधार बना।[2] अनवारे सुहैली ग्रन्थ 15वीं सदी में हिरात के तैमूरी सुल्तान हुसैन बैकरा के दरबारी विद्वान् वाइज काशिफी के द्वारा लिखा गया था। इसका प्रमुख आधार नसरुल्लाह मुंशी का फ़ारसी कलीलः व दिम्नः ग्रन्थ था।

पञ्चतन्त्र की कहानियों का सबसे अद्‌भुत प्रयोग मौलाना जलालुद्दीन रूमी ने अपनी मसनवी ए मानवी में किया है। उन्होंने पञ्चतन्त्र की नैतिक कथाओं को आध्यात्मिक स्वरूप दिया है तथा उनका प्रयोग अपने कथ्य को पुष्ट करने में किया है। मौलाना के पास पञ्चतन्त्र अपने मूल रूप में उपलब्ध नहीं था। उन्होंने इसके फ़ारसी (अथवा अरबी रूपान्तरण) का उपयोग किया ।

सम्पूर्ण विश्व में भ्रमण करने पश्चात् भी पञ्चतन्त्र की कथाओं के मूल सन्देश में बहुत अधिक अन्तर नहीं देखा गया है। पञ्चतन्त्र की कथाओं का मूल उद्देश्य है- रुचिकर पशुकथाओं

---

1. आधुनिक फ़ारसी में इसका उच्चारण - कलीले व दिम्ने, अरबी तथा उर्दू में कलीला व दिम्ना किया जाता है।
2. .........the Hebrew version 1100 A.D., the Latin about 1270 A.D., The German 1480 A.D., The Italian 1552 A.D., The French 1678 A.D. The Greek in 1080 A.D. The Persian in 12th century A.D. (Vardachari 1960 : 124)

का उपयोग करके बालकों को नीतिशास्त्र की शिक्षा देना। स्वयं पञ्चतन्त्र के प्रारम्भ में इन कथाओं के संग्रह का उद्देश्य राजा अमरशक्ति के मन्दबुद्धि पुत्रों को आख्यान द्वारा नीतिशिक्षण रूपी बताया गया है। विष्णुशर्मा की प्रतिज्ञा उन राजकुमारों को नीतिशास्त्र में निष्णात बनाना ही था[1]। हितोपदेश में भी इन कथाओं का स्पष्ट उद्देश्य यही बताया गया है। इसके प्रस्तावनात्मक श्लोकों में कहा गया है[2]–

**कथाच्छलेन बालानां नीतिस्तदिह कथ्यते॥**

(इस पुस्तक में कहानी के बहाने बच्चों को नीतिं शिक्षा दी जा रही है।)

यही कारण है कि पञ्चतन्त्र के आरम्भ में देवताओं को प्रणाम करने के बाद ग्रन्थकार ने प्राचीन काल के प्रमुख नीतिशास्त्र प्रणेताओं (नयशास्त्रकर्ता) को नमस्कार समर्पित किये हैं–

**मनवे वाचस्पतये शुक्राय पराशराय ससुताय।**
**चाणक्याय च विदुषे नमोऽस्तु नयशास्त्रकर्तृभ्यः॥ (कथामुख 2)**

पञ्चतन्त्र में व्यक्तिगत तथा सामाजिक दोनों प्रकार की नैतिक शिक्षाएँ कथाओं में सुन्दर रीति से गूँथ दी गयी हैं। इनका उद्देश्य यह है कि इसका अध्ययन करने वाले बालकों के हृदय में ये नैतिक शिक्षायें इस प्रकार घर कर जायें कि वे जीवन के किसी भी क्षेत्र में अव्यावहारिक आचरण न करें तथा कहीं भी असफलता प्राप्त न करें। पञ्चतन्त्र की फलश्रुति में भी इसका उद्देश्य यही बताया गया है–

**अधीते य इदं नित्यं नीतिशास्त्रं शृणोति च।**
**न पराभवमाप्नोति शक्रादपि कदाचन॥ (पञ्चतन्त्र कथामुख 10)**

(जो इस नीतिशास्त्र का नित्य अध्ययन करता है तथा इसे सुनता है वह इन्द्र से भी कभी पराजित नहीं हो सकता।)

लेकिन मौलाना जलालुद्दीन रूमी ने अपनी विश्वप्रसिद्ध कविता– मसनवी ए मानवी में पञ्चतन्त्र की नैतिक कथाओं का आध्यात्मिक उपयोग किया है। मसनवी में हमें पञ्चतन्त्र की कथाओं के स्वरूप एवं सन्देश दोनों में आश्चर्यजनक परिवर्तन मिलता है। उन्होंने पञ्चतन्त्र की नैतिक कथाओं को आध्यात्मिक स्वरूप प्रदान करके उनका उपयोग अपने कथ्य को पुष्ट करने में किया है।

---

1. "...पुनरेतांस्तव पुत्रान् मासषट्केन यदि नीतिशास्त्रज्ञान् न करोमि ततः स्वनामत्यागं करोमि।" पञ्चतन्त्र कथामुख पृ० 4
2. हितोपदेश प्रस्तावना श्लोक सं० 8

